A 


B 




C 


D 


E 


F 


G 


H 


I 


J 


K 


L 


M 


N 


O 


P 


Q 


R 


S 


T 





V W

The largest range of kids bikes

**HERO CYCLES**

THE ABC OF CYCLING

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १८ अक्टोबर् - २००१ सञ्चिका - ७



भारतगौरवगाथा

२५



संन्यासिनः वरदानम् (वेतालकथा)

१९



यक्षपर्वतः

११



गुजरातीयजानपदकथा

२८



## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
**अमेरिका-केनडादेशयोः कृते**
**प्रतिकृतिमूल्यम् - $२**
**वार्षिकं शुल्कं - $२०**
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम्
**चेन्नै -**
Ph - 044-2347384, 2347347399
e-mail : advertisements@chandamama.org
**देहली -**
*श्रीमती मोना भाटिया*
Ph - 011-6515111/6565513/6565516
**मुम्बयी -**
*श्री शकीलमुल्ला*
Ph - 022-2661599/2661946/2653057



संस्थापकौ –
**चक्रपाणिः नागिरेड्डी च**

# दानात् अभिवर्धते विद्या

अर्धशतकात् पूर्वम् अस्माकं भारतस्य निर्णेतारः आसन् विदेशीयाः । अतः अस्माकं विद्यालय-महाविद्यालयाः लिपिकारनिर्मातॄणि 'यन्त्रागाराणि' जाताः आसन् तत्काले ।

स्वातन्त्र्यप्राप्तेः अनन्तरं वयं शिक्षणक्रमे परिवर्तनम् आनेतुम् इष्टवन्तः । पाठ्यक्रमस्य परिवर्तनं, पाठ्यक्रमे नूतनविषयाणां योजनम् इत्यादीनि बहुधा कृतानि अस्माभिः । किन्तु इदानीं तस्य सर्वस्य परिणामः कः सिद्धः ? अत्रत्यानां बुद्धिमत्ता मातृभूमिसेवायै न लभ्यते !!

अस्माकं पाठनक्रमस्य कारणतः लक्षशः जनाः अद्य निरुद्योगिनः सन्ति । तथैव कोटिशः जनाः शिक्षणात् वञ्चिताः सन्ति अपि । विशालजनसङ्ख्यायुते अस्माकं देशे बालानां विषये अधिकम् अवधानं दातव्यम् । बहवः शिक्षणं प्राप्तुं न अर्हन्ति दूरकारणतः एव । पुनः केचन विविधैः कारणैः मध्ये एव विद्याभ्यासं परित्यजन्ति ।

ये दूरादिकारणात् विद्यालयं गन्तुं न शक्नुवन्ति किं ते विद्याभ्यासात् एव वञ्चिताः भवेयुः ? न खलु ? विद्याभ्यासः विद्यालयीयभित्तिचतुष्टये एव प्रचलेत् इति नास्ति । गृहम् अपि विद्यालयः भवितुम् अर्हति । ये विद्यालयगमनसौभाग्यं प्राप्तवन्तः ते अपि शिक्षकाः भवितुम् अर्हन्ति विद्यालयात् वञ्चितानां कृते । गृहे पार्श्वगृहे वा ये उद्योगं कुर्वन्तः सन्ति तेषां बालानां शिक्षकाः भवितुम् अर्हन्ति भवन्तः अपि ।

यस्य जन्मदिनम् आचर्यते अक्टोबर्द्वितीयदिनाङ्के, सः राष्ट्रपिता गान्धिवर्यः वदति – 'शिक्षणं बालेषु स्थितान् उत्तमगुणान् अभिव्यञ्जयेत्' इति ।

विद्या दानात् अभिवर्धते । यदा बालाः आत्मना अधीतम् अन्यान् बोधयन्ति तदा तेषां ज्ञानं सुपरिष्कृतं भवितुम् अर्हति ।

नवरात्रोत्सवकाले वयं विद्याधिदेवतां सरस्वतीं पूजयामः खलु ? तदवसरे विद्यादाननिर्णयः यदि क्रियेत तर्हि योग्येन क्रमेण वाग्देव्याः पूजा कृता स्यात् ।

---

*सम्पादकः* – विश्वम्

# भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-९

मित्राणि ! भारतनायकस्पर्धायां भागं वहन्तु । अत्र उल्लिखितानि नामानि सर्वाणि इतिहासतः उद्धृतानि । भवन्तः तानि जानीयुः एव ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



1

१५२६ तमे वर्षे अहं भारते प्रसिद्धिं गतः । मदनुयायिनः मां ख्यातिमन्तं कृतवन्तः । मम मातुः नाम्ना एव अस्माकं कुलं ख्यातं जातम् । अहं कः ?

2

........................................

सुन्दरीं संयुक्तां बलात् अपहृत्य अश्वम् आरुह्य अहं विवाहमण्डपात् निर्गतः । कोऽहम् इति भवन्तः जानन्ति ?

3

........................................

सप्तदशे शतके मया मयूरसिंहासनं कारितम् । मम पत्नी अतिप्रिया आसीत् मम । सा यदा दिवं गता तदा मया एकं स्मारकभवनं निर्मितम् । सोऽहं कः स्याम् ?

4

........................................

अहं ग्रीक्‌राजं विरुध्य युद्धं कृत्वा पराजितः । तदवसरे मया उक्तम् – 'राज्ञः विषये यथा तथा मद्विषये अपि व्यवहरतु' इति । अहं कः इति किं भवद्भिः ज्ञायते ?

5

........................................

मया घोरे युद्धे जयः प्राप्तः । किन्तु सा च घटना मम जीवने महत् परिवर्तनम् अकरोत् । ततः अहं हिंसातः जुगुप्सितः जातः । किं मम नाम ?........................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ........................................

........................................

........................................

........................................

भागग्रहीतुः नाम ........................................

वयः .................... कक्ष्या ....................

सङ्केतः ........................................

........................................

........................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय –

भारतनायकस्पर्धा-९
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै – ६०००९७

उत्तरप्रेषणाय अन्तिमदिनाङ्कः – ५ नवम्बर् – २००१

*नियमाः* –

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । विजेतारः योग्यापारितोषिकं द्विचक्रिकां प्राप्स्यन्ति । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।



# मानवगुणाः

बहुपूर्वतनी घटना एषा । राजा श्रीधरवर्मा ग्रामाधिकारिणां नियुक्तिं यथेच्छं करोति स्म । यान् सः इच्छति तान् एव नियोजयति स्म ।

एवं नियुक्तिं प्राप्तवत्सु केचन दुष्टाः अभवन् । यतः तैः राजाश्रयः प्राप्तः आसीत् । ते जनान् बहुधा पीडयन्ति स्म । जनाः कियत्कालम् एतादृशम् अत्याचारं सोढुं शक्नुयुः ? ते स्वप्रतिनिधिरूपेण प्रभाकरनामकं राज्ञः समीपं प्रेषितवन्तः । जनानाम् अपेक्षा आसीत् यत् प्रभाकरः तेषां हीनां दीनां च स्थितिं विवृत्य न्यायस्य अपेक्षां कुर्यात् इति । प्रभाकरः राजानं दृष्ट्वा ग्रामाधिकारिभिः क्रियमाणम् अन्याय्यम् अत्याचारं च विस्तरेण उक्तवान् ।

श्रीधरवर्मणे प्रभाकरस्य वचनानि सर्वथा न अरोचन्त । ''ये मां न इच्छन्ति ते उद्देशपूर्वकम् अपप्रचारं कुर्वन्तः सन्ति'' इति वदन् सः प्रभाकरं सम्यक् तर्जितवान् ।

तदा प्रभाकरः विज्ञापितवान् - ''प्रभो ! जनानाम् आराध्यदेवस्य जनार्दनस्वामिनः शपथं स्वीकृत्य वदामि यत् जनानाम् आक्षेपे सत्यांशाः सन्ति इति । मम वचने विश्वासं करोतु । ग्रामाधिकारिणां विषये योग्यं कार्याचरणं करोतु । आवश्यकं चेत् विचारणाम् अपि करोतु'' इति ।

तदा राजा हसन् उक्तवान् - ''येषां ग्रामाधिकारिणां व्यवहारस्य विषये भवान् दोषम् आरोपयन् अस्ति ते न दुष्टाः, अपि तु उत्तमाः । तेषां विषये भवान् यत् वदन् अस्ति तत्र सत्यांशः सर्वथा नास्ति । अहम् इदानीं भवन्तं क्षमे । अग्रे यदि भवान्



एतादृशं साहसं करिष्यति, तर्हि भवन्तं कारागृहे स्थापयित्वा कठिनतमं दण्डनं दास्यामि'' इति ।

''प्रभो ! भवान् मां क्षान्तवान् । अतः अहं कृतज्ञः अस्मि । तथापि अहं भवतः सम्मुखे ग्रामाधिकारिणां विषये दोषारोपं करिष्यामि एव । यदि भवान् उचितं भावयति तर्हि मां कारागृहं प्रति प्रेषयितुम् अपि अर्हति । कठोरं दण्डनं ददाति चेदपि कापि चिन्ता नास्ति मम'' इति अवदत् प्रभाकरः निर्भयतया ।

एतत् श्रुत्वा राजा किङ्कर्तव्यतामूढः अभवत् । सः प्रभाकरस्य विषये असन्तुष्टः अपि अभवत् ।

किन्तु प्रभाकरस्य अनुरोधं कार्यदक्षतां च उपेक्ष्य अपि स्थातुं न शक्नोति स्म सः । अतः किमपि अनुक्त्वा सः प्रभाकरं ततः प्रेषयित्वा सचिवैः सह मन्त्रणां कृतवान् ।

तस्मिन् राज्ये महादेवनामकः कश्चन सर्वोत्तमः जनः आसीत् । सः ग्रामं ग्रामं गत्वा जनान् हितवचनानि बोधयति स्म । जीवनस्य नैतिकमूल्यानि ज्ञापयति स्म च । जनाः वदन्ति स्म यत् महादेवस्य कारणतः अनेके दुष्टाः अपि सज्जनरूपेण परिवर्तिताः अभवन् इति । बहूनाम् अभिप्रायः आसीत् यत् सत्यवादी महादेवः दैवांशसम्भूतः इति ।

अतः सचिवैः सूचितम् - ''ग्रामाधिकारिणां विषये सत्यांशाः ज्ञातव्याः चेत् महादेवः नियोजनीयः । तत् दायित्वं महादेवस्य एव भवतु'' इति । राजा महादेवम् आदरपूर्वकम् आनाय्य समस्यायाः विवरणं कृत्वा - ''ग्रामाधिकारिणां नियुक्तिविषये मया दोषः आचरितः इति मम विरोधिनः दोषारोपणं कुर्वन्तः सन्ति । तेषां कथनम् अस्ति यत् अहं यान् इच्छामि तादृशान् एव तस्मिन् पदे नियोजितवान् इति । अतः अस्मिन् विषये किंवदन्त्यः अधिकतया प्रसृताः सन्ति । अन्यस्मिन् कस्मिन् अपि मम विश्वासः नास्ति इत्यतः भवादृशं सत्पुरुषम् अस्मिन् कार्ये नियोजितवान् अस्मि । भवता एव एतस्य न्यायनिर्णयः करणीयः'' इति सूचितवान् ।

महादेवः राज्ञः वचनानि अवधानपूर्वकं श्रुत्वा गम्भीरस्वरेण अवदत् - ''इष्टजनानां विषये प्रशंसा श्रुता चेत् तेषु सन्देहं प्रकटयतु । तादृशानां विषये दुष्प्रचारः अस्ति चेत् तत्र विश्वसितु । महाराजः सन् एतत् भवतः कर्तव्यम् । प्रभाकरेण उक्तं सर्वं

सत्यमेव । तान् ग्रामान् गत्वा मया पूर्वमेव सत्यांशः ज्ञातः अस्ति । तेषां परिवर्तनार्थं मया बहुधा प्रयत्नः कृतः । किन्तु अहं विफलः । भवतः आश्रयं प्राप्य, भवतः वचस्य, प्रभावस्य च दुरुपयोगं स्वीकुर्वन्तः ते स्वच्छन्दं व्यवहरन्तः सन्ति । भवता तेषां विषये उग्रं कार्याचरणं करणीयम् । तदा एव तेषु सत्परिणामाः भवेयुः'' इति ।

महादेवस्य वचनानि राज्ञे न अरोचन्त । अतः सः पुनश्च उक्तवान् - ''महात्मन् ! सर्वेषु भूतेषु भगवान् अस्ति इति भावयामि । भगवदंशयुक्ताः दुष्टाः भवितुं न अर्हन्ति । अतः एव प्रभाकरस्य वचनेषु मम विश्वासः न भवति । मम चिन्तने यदि दोषः स्यात् तर्हि कृपया सूचयतु । भवान् तु सर्वज्ञः'' इति ।

तदा महादेवः अवदत् - ''राजन् ! एतस्याः सृष्टेः काचित् विशेषता अस्ति । प्रायः भवान् तां न जानीयात् । एतत्सम्बद्धां काचित् कथा श्रुता चेत् प्रायः भवतः सर्वेऽपि सन्देहाः परिहृताः भवेयुः'' इति उक्त्वा काञ्चित् कथाम् आरब्धवान् -

''ब्रह्मणा पृथिव्यां जीवसृष्टिः कृता । मनुष्याय एव तेन दैवांशः प्रदत्तः । तेनैव सह बुद्धिः शक्तिः चापि प्रदत्ता । एतस्याः विशिष्टतायाः कारणतः मनुष्यः महात्मा भूत्वा जीवनम् आरब्धवान् । तदा बुद्धिहीनाः इतरजीविनः मनुष्यस्य पीडनम् आरब्धवन्तः । मानवः तु शान्त्याः सहनशक्त्याः च प्रतीकम् आसीत् । अतः मनुष्यजातेः एव समाप्तिसम्भावना कदाचित् उत्पन्ना लोके । अतः एतत् वैपरीत्यं मनसि निधाय ब्रह्मा एकम् उपायं चिन्तितवान् । सः प्रत्येकस्मिन्



जन्तौ, पक्षिणि, कीटे च एकस्य मनुष्यस्य जन्म कारितवान् तत्तज्जीविरूपेण एव । तस्य मनुष्यस्य कारणतः तेषु जीवेषु मनुष्यं प्रति सद्भावना उत्पन्ना । सः मनुष्यः सद्भावनायाः अभ्यासम् अपि कारितवान् । क्रमशः सर्वेऽपि जन्तवः मानवानुकूलव्यवहारम् आरब्धवन्तः । ते मानवजन्मनः महात्तायाः विषयं ज्ञातवन्तः ।

अथ कदाचित् इतरजीविनः सर्वे अपि ब्रह्मणः समीपं गत्वा विज्ञापितवन्तः - ''सृष्टौ विद्यमानेषु सर्वेषु जीवेषु कापि महत्ता भवति एव । मनुष्यांशाः सर्वेषु जीवेषु अस्ति इत्यतः इतरे जीविनः मनुष्यस्य महत्तां ज्ञातुं शक्ताः । तेषु सत्परिणामाः दृष्टाः । ते मनुष्यैः सह आत्मीयभावनया व्यवहरन्तः सन्ति । अतः वयम् अपेक्षामहे यत् अस्मासु

कश्चित् मानवरूपेण जन्म प्राप्नुयात् इति । तदा मनुष्यः अपि इतरजीवानां महत्त्वं ज्ञास्यति । तैः सह आत्मीयतया व्यवहरिष्यति च'' इति ।

ब्रह्मा 'तथास्तु' इति अवदत् ।''

महादेवः राजानम् एतां कथां श्रावयित्वा अवदत् - ''राजन्, येषु पक्षिणः अंशाः भवन्ति ते पक्षिषु प्रीतिमन्तः भवन्ति । साधुप्राणिनाम् अंशैः युक्ताः साधवः इव एव व्यवहरन्ति । क्रूरमृगाणां विषसर्पादीनां च लक्षणैः युक्ताः अन्याय्याचरणे अत्याचारकरणे च निरताः भवन्ति । यदा तेषां दुष्टता सीमाम् अतिक्रम्य गच्छति तदा ते इतोऽप्यधिकम् अत्याचारं कुर्वन्ति । महादुष्टाः च भवन्ति । मनुष्याणां दुष्टतायाः कारण - तत्तद्दुष्टजीवानाम् अंशयुक्तता एव । यथा वयं दुष्टजीवानां हननं मृगयाद्वारा कुर्मः तथैव मनुष्याणाम् अपि हननं करणीयम् । अन्यथा राज्ञः सहयोगेन ते प्रलयकारिणः भवेयुः । तेषां दण्डनम् एव राज्ञः कर्तव्यम्'' इति ।

राजा झटिति महादेवं साष्टाङ्गं प्रणम्य - ''महात्मन् । भवान् मम अज्ञानं दूरीकृतवान् । प्रभाकरादयः यदा ग्रामाधिकारिणां व्यवहारं दृष्ट्वा दोषारोपणं कृतवन्तः तदा अहं तेषु क्रुद्धः आसम् । किन्तु भवान् योग्येन उपदेशेन मम अज्ञानं दूरीकृतवान् । अतः कृतज्ञोऽस्मि । महात्मनां हितबोधेन अपि येषु परिवर्तनं न भवति ते जीवितुम् अनर्हाः । तादृशाः क्रूरजन्तवः मनुष्याणां मध्ये भवितुम् अनर्हाः । एतादृशाः पञ्जरे स्थापनीयाः । राज्ञः मम कर्तव्यम् एतत्'' इति उक्तवान् ।

तदनन्तरं सः अन्यायिनाम् अत्याचारिणां च विषये योग्यं कार्याचरणं कृतवान् । उत्तमजनानाम् आदरं सत्कारं च कृतवान् । अपराधिभ्यः उग्रं दण्डनं दत्तवान् च ।





# यक्षपर्वतः

## ८

*(भल्लूकगुरुः सुरङ्गद्वारे उपस्थितः । खड्गवर्मा जीवदत्तः च मृतस्य वृकस्य शरीरं सुरङ्गस्य अन्तः क्षिप्तवन्तौ । एतत् दृष्ट्वा केचन वृकाः सुरङ्गं प्रविष्टवन्तः । तान् अनुसरन्तौ खड्गवर्मा जीवदत्तः चापि सुरङ्गं प्रविष्टवन्तौ । समरबाहुः तदनुयायी च वृकशिलासमीपे एव स्थितौ आस्ताम् । वृकाः तयोः समीपम् आगताः । तदनन्तरम् .........)*

आत्मरक्षणं कथं करणीयम् इति अजानन् समरबाहुः नितरां भीतः । सः भीत्या परितः दृष्टवान् । 'प्राणरक्षणार्थं किम् इदानीं सुरङ्गप्रवेशः एव शरणम् ?' इति सः चिन्तयन् आसीत् ।

तदा तदनुयायी चन्द्रः उच्चस्वरेण अवदत् – ''श्रीमन् ! वृकाः अस्मत्समीपम् आगच्छन्तः सन्ति । इदानीम् आवयोः मरणं निश्चितम्'' इति ।

अत्रान्तरे खड्गवर्मा परिवृत्य दृष्ट्वा अपायस्थितिं ज्ञात्वा – ''समरबाहो, चन्द्र ! मम हस्तस्य साहाय्येन भवन्तौ उपरि आगच्छताम्'' इति वदन् स्वस्य हस्तं प्रसारितवान् । चन्द्रः समरबाहुः च एतत् वचनं पालयन्तौ खड्गवर्मणः हस्तं गृहीत्वा उपरि आगतवन्तौ । तावत्पर्यन्तं स्वस्य मन्त्रदण्डेन वृकान् निवारयन् स्थितः जीवदत्तः झटिति उत्प्लुत्य उपरि गतवान् ।

ततः ते चत्वारः अपि तीक्ष्णदृष्ट्या सुरङ्गमार्गं परिशीलितवन्तः । खड्गवर्मा जीवदत्तम् अवदत् – ''जीवदत्त ! भल्लूकगुरुः तदनुयायिषु कोऽपि वा अत्र न दृश्यते खलु ? क्व गताः स्युः सर्वेऽपि ?'' इति ।

सुरङ्गस्य अन्तर्भागतः कोऽपि ध्वनिः श्रूयते



वा इति ज्ञातुं जीवदत्तः अवधानम् एकत्रीकृतवान् । ततः सः उक्तवान् - ''खड्गवर्मन् ! सुरङ्गस्य अन्तः कोऽपि कोलाहलः श्रूयते । किन्तु किं प्रवर्तमानम् अस्ति इति तु स्पष्टतया न ज्ञायते । भवान् अपि अवधानपुरस्सरं शृणोतु तावत्'' इति ।

तावता समरबाहुः अवदत् - ''भल्लूकानां रवः, भल्लूकगुरोः आज्ञास्वरः च श्रूयते । भल्लूकगुरुः स्वशिष्यान् जागरूकतावचनानि वदन् अस्ति । इतोऽपि अधिककालम् अत्र स्थितिः सर्वथा न श्रेयस्करी इति भाति मम'' इति ।

तदा खड्गवर्मा हसन् अवदत् - ''अहो, कीदृशः दलपतिः भवान् ! साम्राज्यस्थापनार्थं मरुभूमितः एतावद्दूरम् आगतवतः भवतः एषा अधैर्यप्रवृत्तिः किमर्थम् ? सर्वथा अनुचितम् एतत्'' इति ।

एतत् श्रुत्वा समरबाहुः आत्मनि धैर्यं प्रपूर्य स्वस्य शूलम् उन्नीय - ''यदि अहं मरणं प्राप्नुयां तर्हि मम साम्राज्यस्थापनस्वप्नः साकारतां न गच्छेत् । अतः अहं महतीम् अपि विपदं सम्मुखीकर्तुं सिद्धोऽस्मि । यावत् मम लक्ष्यं सिद्धं न भविष्यति तावत् अहं धीरतां न त्यजामि'' इति अवदत् ।

समरबाहोः एतत् वचनं श्रुत्वा खड्गवर्मा जीवदत्तः च हसितवन्तौ । ततः सुरङ्गमार्गेण अग्रे गच्छन् खड्गवर्मा - ''समरबाहो, यावत् मम हस्ते एषः खड्गः, जीवदत्तस्य हस्ते मन्त्रदण्डः च स्थास्यति तावत् भवतः शूलस्य उपयोगस्य आवश्यकता न भविष्यति । वयं सकुशलं स्वर्णाचार्यसमीपं गमिष्यामः । आवाभ्याम् एतावत् उक्तम् इत्यतः भवता निश्चिन्ततया तु न स्थातव्यम् । आवश्यकतायां सत्यां भवता स्वस्य आयुधस्य उपयोगः करणीयः एव'' इति अवदत् ।

यथा यथा ते सुरङ्गमार्गेण अग्रे गताः तथा तथा वृकाणां रवः, जनानां कोलाहलः च स्पष्टतया श्रूयमाणः जातः । अचिरात् एव ते भल्लूकचर्मधारिणां वासस्थानं प्राप्तवन्तः । तत्रत्यां स्थितिं परिशील्य जीवदत्तः ऊहितवान् यत् भल्लूकगुरुः प्रायः वृकेश्वरीमन्दिरे स्यात् इति ।

एतावता कश्चन भल्लूकचर्मधारी चीत्कुर्वन् भीत्या कम्पमानः धावन् तेषां समीपम् आगतः । कश्चन वृकः मुखम् उद्घाट्य तम् अनुसरति स्म । खड्गवर्मा झटिति अग्रे गत्वा स्वस्य खड्गेन वृकस्य मुखे एकं प्रहारं दत्तवान्



। एतस्मात् पीडाम् अनुभूय आर्तनादं कुर्वन् वृकः ततः प्रतिनिवृत्य पतन् उत्तिष्ठन् वेगेन पलायितवान् ।

ततः जीवदत्तः तं भल्लूकचर्मधारिणम् अपृच्छत् - ''अये ! वृकेश्वरीभक्त । अहं यत् पृच्छामि तस्य समुचितम् उत्तरं ददातु । किन्तु मन्दस्वरेण वक्तव्यं, न तु उच्चस्वरेण । भवतां नायकः भल्लूकगुरुः कुत्र ? भवतः सहचराः सर्वे इतोऽपि एतस्मिन् सुरङ्गे एव सन्ति, उत इतः पलायनं कृतवन्तः ?'' इति ।

''आर्य ! मत्सहचराः सर्वे भीत्या प्रकोष्ठेषु, अन्येषु सुरक्षायोग्येषु स्थलेषु वा निलीय स्थिताः सन्ति । भल्लूकगुरुवर्यः तावत् वृकेश्वरीमन्दिरे पूजायां निमग्नः अस्ति'' इति उक्तवान् सः भल्लूकचर्मधारी ।

''मानवान् गृहीत्वा दासान् कुर्वन्तः स्वस्य शूरतां निर्लज्जं ख्यापयन्ति खलु भवन्तः ? क्व गता सा शूरता भवताम् ? किमर्थं वृकेभ्यः एतावती भीतिः ?'' इति ।

''श्रीमन् ! मानवाः तु बलवतः आदेशं विना विरोधं पालयन्ति । किन्तु एते वृकाः न तथा । एते कथं वा सम्मुखीकर्तुं शक्याः ? बलवतः जनान् अपि खादिष्यन्ति एते'' इति उत्तरं दत्तवान् भल्लूकचर्मधारी ।

तदा जीवदत्तः हसन् - ''अये, भीरवः भवन्तः । वचनमात्रे शूरता भवताम् । तदस्तु, वृकेश्वरीमन्दिरस्य मार्गं दर्शयतु । यदि वञ्चयितुं प्रयत्नः क्रियेत तर्हि प्राणैः वियोगः प्राप्तव्यः भवेत्'' इति अवदत् आज्ञास्वरेण ।

भल्लूकचर्मधरी तान् किञ्चित् अग्रे नीत्वा एकं प्रकोष्ठं प्रदर्श्य - ''श्रीमन् ! एतत् एव वृकेश्वरीमन्दिरम् । भल्लूकगुरुवर्यः एतस्य अन्तः अस्ति'' इति ।

खड्गवर्मा विना शब्दं द्वारसमीपं गत्वा



अन्तः दृष्टिं प्रसारितवान् । भल्लूकगुरुः वृकेश्वर्याः पुरतः साष्टाङ्गप्रणामं कुर्वन् अव्यक्तशब्दैः किमपि वदन् आसीत् ।

एतत् दृष्ट्वा खड्गवर्मा जीवदत्तम् अपृच्छत् – ''इदानीं किं करवाम ?'' इति ।

तदा जीवदत्तः अवदत् – ''स तु मूर्तेः पुरतः साष्टाङ्गप्रणामभङ्ग्या अधोमुखं स्थितः अस्ति । अतः भवान् मन्दगत्या गत्वा विग्रहस्य पृष्ठतः स्थित्वा देव्याः स्वरम् एव अनुकुर्वन् तम् उपदिशतु यत् शीघ्रातिशीघ्रम् एतत् सुरङ्गदुर्गं परित्यक्तव्यम्, अन्यथा महती हानिः भविष्यति इति । शीघ्रं गच्छतु तावत्'' इति ।

खड्गवर्मा मार्जालगत्या पदानि स्थापयन् प्रकोष्ठस्य अन्तः गत्वा वृकेश्वरीप्रतिमायाः पृष्ठतः स्थित्वा देव्याः स्वरम् अनुकुर्वन् अवदत् – ''भक्ताग्रेसर ! भल्लूकगुरो ! भवतः भक्त्या नितरां सन्तुष्टाऽस्मि । दैवद्रोहिणां प्रवेशतः एतत् दुर्गम् अपवित्रं जातम् अस्ति । अतः अहम् इदानीम् इतः अदृश्या भूत्वा अरण्ये सरोवरतीरे शमीवृक्षसमीपे वासं करिष्यामि । भवान् शिष्यैः सह तत्र आगत्य मम पूजां करोतु'' इति ।

देव्याः एतत् वचनं श्रुत्वा झटिति उत्थितः भल्लूकगुरुः – ''अम्ब ! वृकेश्वरीदेवि ! ...'' इति किमपि वक्तुम् उद्युक्तः । तदा खड्गवर्मा तत् निवारयन् – ''किमपि मा वदतु इदानीम् । अविलम्बेन सरोवरतीरं प्राप्नोतु'' इति आदिशत् ।

यावत् भल्लूकगुरुः ततः निर्गन्तुम् उद्युक्तः तावता जीवदत्तादयः कुत्रचित् निलीय स्थितवन्तः । प्रकोष्ठात् बहिः आगतः भल्लूकगुरुः शूलम् उन्नीय – ''भो भो, वृकेश्वरीभक्ताः! देव्याः आज्ञा अस्ति यत् झटिति इतः निर्गत्य सरोवरतीरं प्राप्तव्यम् इति । अतः गच्छाम इतः'' इति वदन् सुरङ्गे सञ्चारं कृतवान् । तस्य वचनं श्रुत्वा निलीय स्थिताः सर्वे भल्लूकचर्मधारिणः ततः निर्गत्य एकत्र सम्मिलिताः । निर्गमनात् पूर्वं ते द्रष्टुम् इष्टवन्तः यत् वृकेश्वरी वस्तुतः अपि इतः अदृश्या जाता वा न वा इति । अतः ते वृकेश्वरीमन्दिरं प्रति गन्तुम् उद्युक्ताः ।

खड्गवर्मा जीवदत्तः च वृकान् सुरङ्गात् बहिः प्रेषणे उद्युक्ताः आसन् । समीपम् आगतान् वृकान् दृष्ट्वा भीतः भल्लूकगुरुः शिष्याणां समीपं धावन् गत्वा – ''वृकेश्वरीदेवि ! रक्षतु अस्मान्'' इति आक्रोशनं कृतवान् ।

एतत् दृष्ट्वा खड्गवर्मा आश्चर्यं प्रकटयन् अवदत् - ''पञ्चषाः एव वृकाः एतान् अनुसरन्तः सन्ति । तान् मारयितुम् अपि धैर्यं नास्ति एतेषाम् । अहो भीरुता ! वृकेश्वरी-भक्तानाम् एतेषां दयनीयां दशां दृष्टवतः मम हासः । करुणापात्राणि एते !'' इति ।

जीवदत्तः अग्रे गत्वा स्वमन्त्रदण्डेन एकं वृकं शिरसि प्रहृतवान् । एतस्मात् व्रणितः सः वृकः उच्चैः क्रन्दनम् अकरोत् । एतत् दृष्ट्वा अन्ये वृकाः भीत्या ततः पलायितवन्तः । एतत् दृष्टवतः भल्लूकगुरोः महत् आश्चर्यम् ! सः करौ योजयित्वा जीवदत्तं नमस्कृतवान् ।



जीवदत्तः भल्लूकगुरुं सकृत् नखशिखान्तं दृष्ट्वा अपृच्छत् - ''भोः ! येन कृषिं कृत्वा निश्चिन्तजीवनं यापनीयम् आसीत् तेन भवता किमर्थम् एते वृकाः पालिताः ? किमर्थं वा वृकेश्वर्याः उपासना आरब्धा ?'' इति ।

तदा भल्लूकगुरुः विनयेन अवदत् - ''महाशय ! सर्वान् अधिकारबलेन शासन् सुखेन जीवनीयम् इति मम प्रबला इच्छा आसीत् । अतः एवं कृतं मया'' इति ।

''अग्रे किं करणीयम् इति भवतः चिन्तनम् ? शिष्याः तु भवन्तम् एव वृकानां मध्ये परित्यज्य अरण्ये पलायनं कर्तुम् उद्युक्ताः दृश्यन्ते'' इति उक्तवान् खड्गवर्मा ।

''ते मां परित्यज्य न गताः । वृकेश्वर्याः उपासनार्थं ते सरोवरतीरं गन्तुम् उद्युक्ताः । महाशक्तिशालिनी वृकेश्वरीदेवी इदानीम् इतः निर्गता खलु ?'' इति उक्तवान् भल्लूकगुरुः ।

अत्रान्तरे चत्वारः भल्लूकचर्मधारिणः धावन्तः आगत्य उक्तवन्तः - ''गुरुवर्य ! सरोवरतीरे चत्वारः उष्ट्राः सन्ति । स्वर्णाचार्य-नामकः तेषां नायकः अस्मदीयौ उभौ मारितवान् । पञ्च जनाः तैः निगृहीताः । एतां वार्तां भवतं निवेदयितुं वयं धावन्तः अत्र आगताः'' इति ।

स्वर्णाचार्यस्य नाम्नः श्रवणात् खड्गवर्मा, जीवदत्तः, समरबाहुश्च नितराम् आश्चर्य-चकिताः । 'पर्वतप्रदेशे दुर्गनिर्माणकार्ये निमग्नः सः कथं वा पञ्चषैः अनुचरैः सह अत्र उपस्थितः ?' इति तैः न ज्ञातम् ।

प्रवृत्तं तु एतत् -

स च पर्वतप्रदेशः वीरपुरीयः । वीरपुरी-राजः वीरसिंहः । सप्ताहात् पूर्वं वीरपुरीयः जन्तुशालाधिकारी कश्चन मृगाणां पशूनां च ग्रहणार्थम् अरण्यम् आगतः आसीत् । तेन सह दशाधिकाः सैनिकाः अपि आसन् ।



जालं प्रसार्य केचन पक्षिणः, उभौ व्याघ्रौ च गृहीताः तैः । ते मध्याह्नभोजनार्थम् नदीतीरे उपविष्टाः ।

कश्चन भटः शीघ्रं भोजनं समाप्य - 'समीपे कुत्रचित् किं कोऽपि नूतनः पक्षी दृश्येत ?' इति परिशीलयितुम् इच्छन् अरण्ये किञ्चिदग्रे गतवान् । अनतिदूरे एव रज्ज्वा बद्धाः केचन उष्ट्राः तेन दृष्टाः । एतत् दृष्ट्वा आश्चर्यम् अनुभवन् सः प्रत्यागत्य अधिकारिणं सर्वं निवेदितवान् ।

''उष्ट्रः ! कुत्र अस्ति सः ? सः अस्माकं जन्तुशालायां यदि स्यात् तर्हि अस्माकं राज्यस्य कीर्तिः वर्धेत । राजा च सन्तुष्टः भवेत्'' इति उत्साहेन उक्तवान् सः अधिकारी ।

तदा सैनिकः उक्तवान् - ''श्रीमन् ! ते च उष्ट्राः बद्धाः दृष्टाः मया । एतस्मात् स्पष्टं यत् तेषां स्वामी अपि तत्रैव स्यात् इति'' इति ।

''सः कोऽपि स्यात् नाम । एषः प्रदेशः, अरण्यम्, आकाशः च वीरपुराधीनम् । अस्माकं राजा वीरसिंहः एव एतस्य सर्वस्य स्वामी । अतः भवन्तः चत्वारः गत्वा कञ्चित् उष्ट्रं गृहीत्वा आगच्छन्तु । यदि तस्य स्वामी तदवसरे प्राप्तः चेत् तमपि बद्ध्वा आनयन्तु'' इति आदिष्टवान् अधिकारी ।

चत्वारः सैनिकाः उष्ट्रसमीपं गताः । उष्ट्रस्वामी समीपे कुत्रापि तैः न दृष्टः । अतः ते उष्ट्राणां रज्जुं ग्रहीतुम् उद्युक्ताः । एतान् दृष्ट्वा भीताः उष्ट्राः उच्चैः ध्वनिं कृतवन्तः । पादैः गुल्मलतादीन् प्रहरन्तः कोलाहलं कृतवन्तः च ।

मृगयार्थं गताः स्वर्णाचार्यः तदनुयायिनः च मृगयां समाप्य कुत्रचित् उपविश्य विश्रान्तिम् अनुभवन्तः आसन् । तदा तैः उष्ट्राणां चीत्कारः श्रुतः । 'कोऽपि सिंहः व्याघ्रः वा आक्रमणं कृतवान् स्यात्' इति चिन्तयन्तः ते खड्गं हस्तेन गृहीत्वा धावन्तः उष्ट्रसमीपं गताः ।

आगच्छतः एतान् दृष्ट्वा वीरपुरीयाः सैनिकाः अपि खड्गं गृहीतवन्तः । समरबाहोः कश्चन अनुचरः क्रोधेन उक्तवान् - ''के भवन्तः ? सैनिकवेषेण स्थिताः लुण्ठाकाः इव भासन्ते । उष्ट्रस्य अपहरणार्थं कृतः अयं यत्नः सर्वथा खण्डनार्हः'' इति ।

''वयं न लुण्ठाकाः, अपि तु वीरसिंह-महाराजस्य सैनिकाः । भवतः उष्ट्रान् चोरयितुं न उद्युक्ताः वयम् । करादिकम् अदत्त्वा अस्माकं राज्ञः आधीन्ये स्थितम् अरण्यं प्रविष्टं

यत् तदर्थम् एते नीयन्ते अस्माभिः'' इति निर्भयतया उक्तवान् कश्चन सैनिकः ।

''कः सः वीरसिंहराजः ? एतस्य अरण्यप्रदेशस्य प्रभुः अस्ति अस्माकं समरबाहुमहाराजः । तस्य उष्ट्रान् अपहर्तुम् उद्युक्तान् भवतः सर्वान् कठोरतया दण्डयिष्यामः वयम् । भवन्तः खड्गं कोषे स्थापयित्वा शरणागताः भवन्तु'' इति आज्ञापितवान् स्वर्णाचार्यः ।

वीरसिंहसैनिकाः एतस्य विरोधं कृतवन्तः । अतः खड्गयुद्धं प्रवृत्तं तत्र । तस्मिन् युद्धे उभौ वीरसिंहसैनिकौ मृतौ । तृतीयः व्रणितः । चतुर्थः कथञ्चित् ततः पलाय्य अधिकारिणः समीपं गतवान् ।

रक्तसिक्ततया आगच्छन्तं सैनिकं दृष्ट्वा सः अधिकारी पृष्टवान् – ''एतत् तु नितराम् आश्चर्यकरम् !! मया ग्रन्थेषु पठितम् आसीत् यत् उष्ट्राः मांसाहारिणः न इति । किं ते भवन्तं दष्टवन्तः ? अन्ये त्रयः किं तैः भक्षिताः ?'' इति ।

''महोदय ! मम व्रणानां कारणं न उष्ट्राः, अपि तु उष्ट्रस्वामिनः । ते एव मत्सहकारिणः मारितवन्तः । ते कुतः आगताः इति न ज्ञायते । तेषां खड्गसञ्चालनस्य परिशीलनात् ज्ञायते यत् ते युद्धे सुनिपुणाः इति'' इति निवेदितवान् सैनिकः ।

''खड्गविद्यायां वीरपुरीयाः सैनिकाः एव सुनिपुणाः । एतत् ते अन्यराज्यीयाः न जानन्ति इति भाति । अस्माकं खड्गविद्यानैपुण्यं जानन्तु नाम ते'' इति वदन् सः कोषात् खड्गम् आकृष्टवान् । अन्ये सैनिकाः अपि खड्गहस्ताः जाताः ।

व्रणितः सैनिकः तान् उष्ट्रजनसमीपं नेतुम् उद्युक्तः । तावता समरबाहोः सैनिकाः तदभिमुखम् एव आगताः । तान् दर्शयन् सः व्रणितः सैनिकः अवदत् – ''अस्मदीयान् मारितवन्तः बलशालिनः ते एव'' इति ।

''अयि भोः, वीरसैनिकाः ! एते तु अविवेकिनः भीरवः । यमकिङ्करान् अपि जेतुं समर्थान् अस्मान् पीडयितुम् उद्युक्ताः सन्ति एते । एतेषां गर्वं धूलिसात्करवाम'' इति स्वसैनिकान् वदन् सः अधिकारी महता उत्साहेन समरबाहोः अनुचराणां दिशि वेगेन गतवान् । – *(अनुवर्तते)*



अत्रास्ति प्रश्नावली !!

# चिलिकासरोवरम्



एशियाखण्डे एव अतिविशालत्वेन ख्यातं लवणजलोपेतं चिलिकासरोवरं पश्यन्तु । प्रकृति-सौन्दर्यस्य आगारम् एतत् । ११०० चतुरस्र कि.मी. युक्तं एतत् स्थलं पक्षिवीक्षकाणां स्वर्गायते । श्वेतोदराः समुद्रगृध्राः, नीलवर्णः कुक्कुटः, बकः इत्यादीनां विविधजातीयानां पक्षिणाम् आवासस्थानम् एतत् । विविधजातीयाः अन्येऽपि पक्षिणः, विशिष्य राजहंसाः शैत्यकाले अत्र वासार्थम् आगच्छन्ति ।

पिञ्छवर्णीयाः राजहंसाः चित्ताकर्षकाः । सरोवरं परितः स्थिते अरण्ये हरिणाः, नकुलाः, कण्टकिनः, सर्पाः, कपयः, कूर्माः इत्यादयः अपि द्रष्टुं शक्याः ।

सरोवरे तिलकायमानान् द्वीपान् प्रति गन्तुम् अपि अर्हन्ति भवन्तः नौकाविहारसुखम् अनुभवन्तः । मत्स्यग्रहणं, नौकाचालनम् इत्यादीनां निमित्तम् अपि अत्रास्ति उत्तमा व्यवस्था । यदि जलकेलिषु भवताम् आसक्तिः तर्हि निर्बाधं प्रविशन्तु जलक्रीडा-विभागम् ।

'चिलिका'सरोवरं समुद्रः च 'शतपद' इत्यत्र सङ्गच्छेते । तच्च सङ्गमस्थलं सरोवरात् २७ कि.मी.दूरे अस्ति । तत्र कदाचित् 'डाल्फिन्'मीनाः अपि दृष्टिगोचराः भवन्ति अदृष्टशालिनाम् ।

चिलिकां प्रति गमनं कथम् इति ? पुरीतः, कटकतः, भुवनेश्वरतः वा बस्यानेन टेक्सीयानेन वा गमनं भवितुम् अर्हति । कोलकता-चेन्नै-रेल्यानेन गतं चेत् चिलिकायां, बालुगांवस्थानके, रम्भायां वा अवतीर्य चिलिका प्राप्तव्या । समीपतरं विमानस्थानकं भुवनेश्वरे अस्ति, यच्च चिलिकातः १०० कि.मी.दूरे अस्ति ।

---

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

### ऊनचतुर्दशवर्षीयाः अत्र भागं वोढुम् अर्हाः !!

### स्पर्धा - २

१. चिलिकाह्रदः प्रवासशील-पक्षीणां आश्रयस्थानं भवति, परन्तु एतेषु कः पक्षी अतीव आकर्षणीयः भवति?

.......................................................

२. दक्षिणामेरिकीयस्य शान्तिसागरस्य रेड्लेतः प्रस्थिताः कूर्माः सुदूरप्रयाणं कृत्वा ओरिस्साराज्यस्य किं स्थानं प्राप्नुवन्ति ?

.......................................................

३. सा जन्तुशाला का, यस्यां च अपूर्वजातीयाः व्याघ्राः निवसन्ति ? व्याघ्रजातिश्च का ?

.......................................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नाम-सङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्ट-सङ्केताय प्रेषयन्तु -

**Orissa Tourism Quiz Contest**
**Chandamama India Limited**
**No.82, Defence Officers Colony**
**Ekkatuthangal, Chennai - 600 097**

नाम - .......................................

वयः - .......................................

सङ्केतः - .......................................

.......................................

Pin : .............. Phone ...............



Winners picked by Orissa Tourism in each contest will be eligible for **3-days, 2-night** stay at any of the **OTDC Panthanivas**, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar - 751 014. Ph : (0674) 432177. Fax : (0674) 430887, e-mail : ortour@sancharnet.in. Website : Orissa-tourism.com

## वेताल-कथा

# संन्यासिनः वरदानम्

दृढवती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये, राजन् ! एतस्मिन् मध्यरात्रे भवान् एतावन्तं क्लेशं किमर्थम् अनुभवति ? किं कापि अपूर्वशक्तिः सम्पादयितुम् इष्यते भवता ? अथवा कस्यचित् वा हितस्य साधनार्थम् एतत्सर्वं क्रियते ? भवान् न जानीयात् यत् प्राप्तानाम् अपि अपूर्वशक्तीनां परिणामः कीदृशः भवेत् इति । स च परिणामः परिवर्तनशीलः । अत्र उदाहरणरूपेण शङ्करस्य कालीपादस्य च कथां श्रावयामि । मार्गायासपरिहारार्थं तां कथां श्रद्धया शृणोतु तावत्''



इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं विराटदेशे कस्मिंश्चित् लघुग्रामे धर्मपालः नाम कश्चन कृषिकः निवसति स्म । तस्य प्रीतिपात्रपुत्रः शङ्करः । शङ्करस्य माता तदीये बाल्यकाले एव दिवं गता आसीत् । अतः धर्मपालः पुत्रं महत्या प्रीत्या पोषितवान् । पितुः प्रीत्याधिक्य-कारणतः शङ्करः विद्यावान् न जातः । तारुण्यं प्राप्यापि सः व्यर्थतया कालायापनं करोति स्म । पिता चिन्तितवान् - 'विवाहः कृतः चेत् सर्वं सम्यक् भवेत्' इति । अतः शङ्करस्य विवाहः तेन निर्वर्तितः ।

कनका तस्य पत्नी जाता । सा पत्युः व्यवहारे परिवर्तनं आनेतुं बहुधा प्रयत्नं कृतवती । किन्तु सफलता न प्राप्ता तया । शङ्करः तु पूर्णोदरं भुक्त्वा आसायं ग्रामे व्यर्थाटनं कृत्वा रात्रौ गृहं प्रत्यागच्छति स्म ।

स्वस्य विवाहस्य कारणीभूतं श्वशुरं बहुधा निन्दति स्म कनका । ''मम जीवनं नाशितं भवता । अहम् एतस्य प्रतीकारं साधयिष्यामि एव'' इति सा तं वदति स्म सर्वदा ।

केषाञ्चित् दिनानाम् अनन्तरं धर्मपालः दिवंगतः । एतस्य कारणतः शङ्करस्य दुर्दिनानि आरब्धानि । इदानीं कनका पत्युः निन्दनम् आरब्धवती ।

कदाचित् शङ्करस्य कश्चन सुहृत् आगतः । सः नगरे वसति स्म । तस्य आगमनं निवेद्य शङ्करः पत्नीम् उक्तवान् - ''अद्य मम मित्रम् अपि भोजनार्थं तिष्ठति । अतः तस्य निमित्तं अपि पाकं करोतु'' इति ।

तदा कनका महता क्रोधेन उक्तवती - ''बराटिकामात्रं धनम् अर्जयितुम् अपि सामर्थ्यं नास्ति भवतः । एतादृशाय भवते मया किमर्थं पाकः करणीयः ? भवतः मित्राय अपि मया किमर्थं पाकः क्रियेत ? एषा न धर्मशाला । अहम् अद्य सर्वथा पाकं न करिष्यामि'' इति ।

शङ्करस्य मित्रम् एतत्सर्वं दृष्ट्वा प्रतिवचनं विना ततः निर्गतवान् । शङ्करः एतम् अपमानं सोढुं न शक्तः । सः पत्न्याः व्यवहारतः जुगुप्सां प्राप्य तस्मिन् एव क्षणे गृहं परित्यज्य निर्गतवान् ।

एवं गच्छन् सः अरण्यं प्राप्तवान् । अन्धकारः प्रसरन् आसीत् । तथापि शङ्करः अग्रे गच्छन् आसीत् । अत्रान्तरे कश्चन ध्वनिः श्रुतः - ''भोः, कः भवान् ? अन्धकार-प्रसारस्य अनन्तरम् अरण्यप्रवेशः अपायकरः इति किं भवान् न जानाति ?'' इति ।

ध्वनिम् अनुसरन् शङ्करः पृष्ठतः दृष्टिं

प्रसारितवान् । ततः अनतिदूरे एव कश्चन संन्यासी शिलायाः उपरि उपविष्टः आसीत् । तस्य समीपं गत्वा तदीयं मुखं परीक्षादृष्ट्या दृष्टं शङ्करेण । तत्र अपूर्वं तेजः दृश्यते स्म ।

शङ्करः तं साष्टाङ्गं नमस्कृत्य स्वस्य करुण-कथां श्रावितवान् । संन्यासी सर्वं शान्ततया श्रुतवान् । ततः शङ्करः उक्तवान् - ''श्रीमन् ! मम पत्न्याः स्वभावपरिवर्तनं कर्तुं यदि शक्येत तर्हि तत् भवता एकेन एव । यदि भवता तत् कर्तुं न शक्येत तर्हि अहम् अत्रैव वासं करिष्यामि भवतः पादसेवां कुर्वन्'' इति ।

संन्यासी आदौ असन्तुष्टः । शङ्करः पुनः पुनः यदा प्रार्थितवान् तदा सः मन्दहासं प्रकटयन् नेत्रे निमीलितवान् । ततः पार्श्वस्थात् कमण्डलुतः जलं स्वीकृत्य हस्तेन गृहीत्वा - ''कनकायाः कर्कशता सर्वथा अपगच्छतु'' इति वदन् तत् भूमौ पातितवान् ।



ततः सः शङ्करम् उक्तवान् - ''एतस्मिन् घोरान्धकारे अग्रे गमनं प्रतिगमनं वा अपायकरम् । अतः अद्य रात्रौ भवान् अत्रैव वासं करोतु । श्वः प्रातः भवान् गृहम् एव गच्छतु । भवतः पत्न्याः व्यवहारः इदानीं सुपरिष्कृतः अस्ति । अतः गृहं प्रति गमनात् एव भवतः हितं सेत्स्यति'' इति ।

शङ्करः संन्यासिनं नमस्कृत्य तां रात्रिं तत्रैव यापयित्वा अनन्तरदिने प्रातः गृहं प्रतिगत-वान् । गृहम् आगतं पतिं दृष्ट्वा कनका सन्तोषं पश्चात्तापं च अनुभवन्ती तस्य पादौ गृहीत्वा अश्रूणि मोचयन्ती - ''क्षन्तव्या अहम् । यत् न वक्तव्यम् आसीत् तत् उक्तं मया । असमीचीनव्यवहारेण भवति खेदः जनितः मया । मम पापाचारस्य प्रायश्चित्तं किम् इति अहं न जाने'' इति ।

एतत् श्रुत्वा शङ्करः नितरां सन्तुष्टः । सः अरण्ये प्रवृत्तं समग्रं पत्नीं निवेद्य अवदत् - ''तस्य संन्यासिनः वरदानस्य कारणतः एव भवती स्वभावपरिवर्तनं प्राप्तवती अस्ति'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन्ती कनका - ''देवाः वरं यच्छन्ति इति तु मया श्रुतम् आसीत् । किन्तु संन्यासिनः अपि वरं दातुं शक्नुवन्ति इति तु मया अद्यैव ज्ञातम् । आस्तां तावत् । वरप्राप्त्या अस्माकं लाभः एव जातः'' इति उक्त्वा स्वस्य शरीरस्य वर्णं सकृत् विलोक्य सा अवदत् - ''मम शरीरस्य वर्णः न श्वेतः । स्थौल्यम् अपि अधिकम् । अतः मम श्वेतता कृशाङ्गिता च यथा स्यात्



तथा संन्यासितः वरं प्राप्नोतु'' इति ।

शङ्करः पत्न्याः इच्छायाः पूरणार्थम् अनन्तरदिने संन्यासिसमीपं गतवान् । संन्यासी शङ्करस्य अपेक्षां श्रुत्वा मन्दहासं प्रकटयन् वरं दत्तवान् । वरं प्राप्य शङ्करः गृहं प्रत्यागतवान् । गृहे पत्नीं दृष्ट्वा सः नितरां आश्चर्यचकितः । यतः सा परमसुन्दरी जाता आसीत् । तस्याः तारुण्यम् अपि शोभते स्म ।

अनन्तरदिने सा पुनः शङ्करम् उक्तवती - ''अहं पाकं सम्यक् न जानामि । मया कृतः पाकः रुचिकरः न भवति । अतः अहं रुचिकरं पाकं कर्तुं समर्था यथा स्यां तथा संन्यासितः वरं प्राप्नोतु'' इति ।

पत्न्याः इच्छायाः पूरणार्थं शङ्करः पुनरपि संन्यासिनः समीपं गतवान् । 'अल्पेच्छायाः पूरणार्थं संन्यासिनः समीपं गमनं न शोभते' इति सः जानाति स्म । तथापि अनन्यगतिकतया सः तत्र गतवान् । संन्यासी एतस्याः अपि इच्छायाः पूरणार्थं वरं दत्तवान् ।

ततः सप्ताहस्य अनन्तरं कनका शङ्करं पुनः उक्तवती - ''अहम् इदानीं सुन्दरी अस्मि । पाके अपि निपुणा जाता अस्मि । किन्तु किम् एतेन ? अस्माकं दारिद्र्यं तु न दूरं गतम् । सम्पत्तिं विना रूपेण, पाककौशलेन वा किम् ? अतः पुनरपि संन्यासिनः समीपं गत्वा सम्पत्तिं प्राप्य आगच्छतु । तेन एव अस्माकं जीवनं सुखमयं भवेत्'' इति ।

एतदवसरे असन्तोषं प्रकटयन् एव शङ्करः अरण्यं गतवान् । किन्तु संन्यासी पूर्वतने स्थाने न आसीत् । इतस्ततः तेन अन्वेषणं कृतम् । किन्तु संन्यासी कुत्रापि न दृष्टः । निराशः शङ्करः ग्रामं प्रत्यागतवान् । ग्रामस्य प्रवेशसमये एव कश्चन पुरुषः तम् अपृच्छत् - ''अये शङ्कर ! अपि कुशलम् ? भवतः पत्नी सुखेन अस्ति खलु ?'' इति ।

यः तस्मै वरं दत्तवान् सः संन्यासी एव लौकिकवेषेण स्थितः आसीत् तत्र । क्षणकालानन्तरम् अभिज्ञानं प्राप्य शङ्करः अपृच्छत् - ''किं श्रीमन् ! भवतः काषायवस्त्रं श्मश्रुदीर्घकेशादयः च क्व गताः ?'' इति ।

तदा संन्यासी हसन् उक्तवान् - ''मम नाम कालीपादः इति । असुन्दर्या पत्न्या सह जीवनं शक्येत, किन्तु कर्कशया अनुक्तग्राहिण्या सह जीवनं नितरां कष्टकरम् इति प्राचीनाः यत् वदन्ति तत् युक्तम् अस्ति । मम पत्नी कर्कशा अनुक्तग्राहिणी च । तया सह वासं कर्तुम् अशक्नुवन् अहं संन्यासं स्वीकृतवान् आसम् । षण्णां वर्षाणां तपसः फलतः मम मुखात् यत्

निर्गच्छति स्म तत् अवितथं भवति स्म । एतस्य कारणतः भवतः पारिवारिकं जीवनं सुखमयं जातम् । एतत् दृष्टवतः मम मनसि विचारः आगतः यत् तपसः उपयोगेन मया स्वस्य परिवारे कुतः परिवर्तनं न कल्पनीयम् इति । अतः एव अहं काषायवस्त्रं परित्यज्य मदीयं ग्रामं गच्छन् अस्मि'' इति ।

संन्यासिनः वचनं श्रुत्वा नितरां खिन्नः शङ्करः अवदत् - ''श्रीमन् ! षट् वर्षाणि भवता तपः आचरितम् । इतोऽपि एकं दिनं तत् तपः अनुवर्तयतु कृपया । ततः भवतः हानिः काऽपि न भविष्यति । यदि भवतः तपः एकदिनं यावत् अनुवर्तेत तर्हि अहं भवता दीयमानस्य वरस्य बलात् ऐश्वर्यं प्राप्नुयाम् । तेन मम कुटुम्बजीवनं सुखमयं स्यात् । एतदर्थम् एव मया अरण्यं गतम् आसीत् । इदानीं ततः एव आगच्छन् अस्मि'' इति ।



तदा कालीपादः उच्चैः हसन् - ''शङ्कर ! कष्टस्य फलम् आनन्ददायकं भवति इति प्राज्ञाः वदन्ति । अतः आलस्यं परित्यज्य भवान् श्रमेण कार्यं करोतु । ततः धनं प्राप्यते, सुखम् अपि प्राप्यते । यदि दैवम् अनुकूलकरं स्यात् तर्हि पुनः मिलाव तावत् । अहं मम ग्रामं गच्छन् अस्मि'' इति उक्त्वा ततः निर्गतवान् ।

कालीपादः यदा स्वगृहं प्राप्तवान् तदा रात्रिः जाता आसीत् । गृहस्य वातायनानि उद्घाटितानि आसन् । अतः गृहस्य अन्तः स्थितानां सम्भाषणं स्पष्टतया श्रूयते स्म । तस्य पत्नी बालामणिः दशवर्षीयां पुत्रीम्, अष्टवर्षीयं पुत्रं च वदन्ती आसीत् -

''भवतोः पितुः ऐश्वर्यं तु पर्याप्तमात्रेण अस्ति । किन्तु तस्य रक्षकः कोऽपि नास्ति । भवतोः शिक्षणादिविषये अपि अवधानदाता कोऽपि नास्ति गृहे । पञ्चषाणां वर्षाणाम् अनन्तरं विवाहादिविषयाः अपि चिन्तनीयाः भविष्यन्ति । मया एकाकिन्या एतत्सर्वं वोढुं न शक्यते । भवतोः पिता नितरां कठोरः । अहं कर्कशकण्ठा स्याम् । यत् स्फुरति तत् वदेयम् अपि । किम् एतावतः निमित्तम् एव संन्यासस्वीकारः युज्यते ? याः दुष्टपत्न्यः सन्ति तासां सर्वासां पतयः किं संन्यासिनः जाताः ? यथा पतिः संन्यासं स्वीकर्तुं शक्नोति तथा किं पत्न्यः संन्यासं स्वीकर्तुम् अर्हन्ति ? न खलु ? एवं तर्हि किं तासाम् आत्महत्या एव शरणम् ? एतस्मात् क्लेशभारात् अहं नितरां श्रान्ता अस्मि । मरणमपि प्रियं मम''

इति । तदनन्तरं कश्चन घट्टनशब्दः श्रुतः ।

'मम पत्नी भित्तौ शिरः घट्टयन्ती स्यात्' इति विचिन्त्य कालीपादः वातायनसमीपे मुखं नीत्वा - ''बालामणे ! एषोऽहं भवत्याः पतिः प्रत्यागतः अस्मि । द्वारम् उद्घाटयतु तावत्'' इति उक्त्वा सशब्दं ताडितवान् ।

गृहम् आगतं पतिं दृष्ट्वा अपि बालामणेः कोपः न शान्तः । सा पतिं निरन्तरं निन्दितवती । एतत् सर्वं दृष्ट्वा कलीपादः - 'मम दौर्भाग्यं माम् इतोऽपि बाधते । ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते' इति चिन्तयन् विधिं निन्दितवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! शङ्करः विशेषप्रयासं विनैव पत्न्याः स्वभावस्य परिवर्तनं कारयितुं शक्तवान् । किन्तु षट् वर्षाणि तपः कृतवान् कालीपादः एतादृशं फलं साधयितुं न शक्तः । किमर्थम् एवम् ? वैद्यः अन्येषां रोगाणां निवारणे समर्थः सन् अपि स्वगृहजनानां चिकित्सायां समर्थः न भवति यथा तथा किम् अत्र प्रवृत्तम् ? दोषः कस्मिन् अंशे अस्ति ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

वेतालस्य सन्देहस्य निवारणार्थं त्रिविक्रमः अवदत् - ''आदौ स्वस्य तपःशक्तिविषये विश्वासः न आसीत् कालीपादस्य । यदा स्वशक्तिः तेन अभिज्ञाता तदा यथाशक्ति शङ्करस्य साहाय्यं कृतवान् सः । शङ्करस्य पत्न्यां यथा परिवर्तनं जातं तथा मम पत्न्याम् अपि करणीयम् इति विचिन्त्य गृहं प्रति प्रस्थितवान् सः । यावत् सः परहितं चिन्तयन् आसीत् तावत् तदीये वचने शक्तिः आसीत् । किन्तु यदा सः स्वहितस्य चिन्तनम् आरब्धवान् तदा तदीया तपश्शक्तिः अपगता । अतः सः स्वपत्न्याः स्वभावे परिवर्तनं साधयितुं न शक्तः एतस्मात् सिद्ध्यति यत् परहितं चिन्तयतः वचने एव शक्तिः भवति इति'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# २०. प्रकृत्यां दैवत्वस्य दर्शनम्



चमेली-सन्दीपयोः कृते तत् दिनम् अविस्मरणीयम् आसीत् । तद्दिने तौ ग्रामात् अनतिदूरे स्थितं किञ्चित् विहारस्थलं प्रति गन्तुं पितामहस्य प्राध्यापकस्य देवनाथ-वर्यस्य अङ्गीकारं प्राप्तवन्तौ आस्ताम् । सरोवरस्य तीरे विद्यमानं विहारस्थलं तत् । सरोवरस्य अपरस्मिन् तीरे वृक्षैः पूर्णः कश्चन महान् पर्वतः आसीत् । बालानां कृते तेषां मित्राणां सहवासः अपि आसीत् इत्यतः ते सन्तुष्टाः आसन् ।

वातावरणं हितकरम् आसीत् । सरोवरं परितः स्थितेषु वृक्षेषु बहवः पुष्पिताः आसन् । रक्तवर्णः सूर्यः पर्वतस्य पृष्ठभागे गन्तुं सिद्धः आसीत् । 'कीदृशं दैवीयदृश्यम्' इति रमणीयं सुन्दरं सूर्यास्तं पश्यन्ती आश्चर्यं प्रकटितवती चमेली ।

देवनाथः आनन्देन - ''वत्से ! सः न केवलं सामान्यः शब्दः, अपि तु अस्माकं श्रेष्ठायाः परम्परायाः वैशिष्ट्यं द्योतयति एषः शब्दः । अस्माकं पूर्वजाः प्रकृतिम् एव देवं भावयन्ति स्म । तादृशभावनायाः कारणतः एव अस्माकं धीरशक्तेः विकासः भवति । अतः एव अस्माकम् ऋषयः हिमालये दैवत्वं दृष्टवन्तः आसन् । ते हिमालयस्य शिखराणि पूजयन्ति स्म । कैलासशिखरं भगवतः शिवस्य स्थानम् इति भाव्यते अद्यापि'' इति विवृतवान् ।

तदा सन्दीपस्य मित्रमेकम् अवदत् - ''किन्तु इदानीं तत्र भयोत्पादकाः निलीय स्थित्वा प्रार्थनार्थम् आगतान् असहायकजनान् हन्तुम् उद्युक्ताः सन्ति खलु ! गते जुलैमासे अमरनाथ-



यात्रानिमित्तं गतान् जनान् ते मारित-वन्तः इति पत्रिकायां पठितम्'' इति ।

तदा प्राध्यापकः देवनाथः खेदेन - ''हन्त ! अस्मासु मानवेषु एतादृशाः विषसर्पाः ! ते कियत्कालं तत्र भवन्ति इति भगवान् एव जानाति । तेः आत्मनः मानवरूपितायाम् विश्वासं कदा वा प्रास्यन्ति इति तु न ज्ञायते'' इति उक्तवान् ।

''पितामह ! कीदृशं यात्रास्थलं तत् ? कः तत्रत्यः देवः ?'' इति पृष्टवान् सन्दीपः ।

तदा देवनाथवर्यः - ''मनुष्यः प्रकृत्यां दैवत्वं पश्यति इत्यस्य उत्तमम् उदाहरणम् अमरनाथ-स्थानम्'' इति उक्तवान् ।

सर्वे बालाः महता कुतूहलेन तस्य मुखं पश्यन्तः आसन् । अतः सः तां कथां तत्सम्बद्धान् विषयान् च वक्तुम् आरब्धवान् -

''समुद्रात् ४००० मीटर्परिमिते उन्नते स्थले अस्ति अमरनाथः । हिमसाम्राज्यस्य गूढस्थले अस्ति एतत् स्थलम् । आ सहस्राधिकवर्षेभ्यः एतत् पवित्रं स्थलम् इति परिगण्यते । मध्ये किञ्चित्कालं जनैः एतत् विस्मृतम् आसीत् । कश्चित् अजापालकः स्वस्य मेषम् अन्विष्य एतं प्रदेशं प्राप्तवान् । तत्र तेन काचित् गुहा दृष्टा । गुहायाः अन्तः उन्नतं शिवलिङ्गम् आसीत् । तत् लिङ्गं पूर्णरूपेण हिममयम् आसीत् । न केवलं तावत्, शिवलिङ्गं शुक्लपक्षे चन्द्रः इव वर्धते स्म । कृष्णपक्षे तस्य गात्रं क्षीयते स्म । शिवलिङ्गं दृष्ट्वा पुलकितः अजापालकः काश्मीदेशस्य राज्ञः सभां गत्वा सर्वं विवरणम् उक्तवान् । तादृशी काचित् गुहा अस्ति इति तत्रत्याः पण्डिताः श्रुतवन्तः आसन् । किन्तु कस्मिन् स्थले अस्ति इति सम्यक् न जानन्ति स्म ते । बहुभ्यः वर्षेभ्यः न केनापि शिवलिङ्गं दृष्टम् आसीत् । गुहाविषयकं कथामात्रं तैः श्रुतम् आसीत् ।

पुराणकाले कदाचित् शिवस्य पत्नी पार्वती शिवेन धृतायाः कपालमालायाः विषये कुतूहलेन पृष्टवती । तदा शिवः अवदत् - ''एते कपालाः भवत्याः सर्वेषां पूर्वजन्मनां कपालाः'' इति ।

यदा यदा सा पार्वती मरणं प्राप्तवती तदा तदा शिवः तस्याः कपालानां सङ्ग्रहणं कृतवान् आसीत् । एवं प्राप्तान् कपालान् मालायां योजयति स्म सः ।

पार्वती पृष्टवती - ''तत् कथम् ? अहं बहुवारं मरणं प्राप्तवती । पुनर्जन्म प्राप्तवती चापि । किन्तु भवान् कदापि कथं मरणं न प्राप्तवान् ? भवतः अमरत्वस्य रहस्यं किम् ?'' इति ।

तदा शिवः स्वस्य अमरत्वस्य रहस्यं पार्वतीं

वक्तुम् इष्टवान् । तत् श्रुत्वा पार्वती अपि मरणरहिता भवतु इति ईश्वरस्य इच्छा आसीत् । किन्तु तत् रहस्यं बोधयितुं तादृशं स्थलम् आवश्यकम् आसीत्, यत्र च कोऽपि श्रोता न स्यात् ।

शिवस्य भूतगणाः सर्वत्र अन्विष्य काञ्चित् गुहां प्राप्तवन्तः । शिवः पार्वत्या सह अन्तः उपविश्य तत् रहस्यं तां बोधयन् आसीत् । किन्तु यदा पार्वती सुप्तवती तदा अपि कश्चित् मन्दस्वरेण प्रतिक्रियां दर्शयन् आसीत् । सः न अन्यः, अपि तु कश्चन शुकशावकः । सः शुकशावकः तदा एव अण्डात् बहिः आगतः आसीत् । यदा शिवः शुकशावकस्य अस्तित्वम् अभिज्ञातवान् तदा सः शावकः ततः उड्डीय गतवान् । अनन्तरं सः व्यासस्य पत्न्याः गर्भं प्रविष्टवान् । तस्याः यः शिशुः जातः सः एव अग्रे 'शुकदेवः' इति प्रसिद्धः अभवत् ।

अजापालकस्य मार्गदर्शने राजा सचिवैः सह गुहां दृष्टवान् । एषा घटना सहस्रवर्षेभ्यः पूर्वं जाता ।

तदारभ्य प्रतिवर्षं यदा हिमं द्रवीभूय गुहां प्रति मार्गं कल्पयति तदा सहस्रशः यात्रार्थिनः एतत् प्रकृत्या निर्मितं यात्रास्थलं पश्यन्ति । उत्तमे मुहूर्ते ते पहलगांवतः प्रयाणम् आरभ्य नानाविधानि कष्टानि अनुभूय विघ्नान् सम्मुखी-कृत्य, हिमपातादिकं सोढ्वा शिवलिङ्गस्य दर्शनं कुर्वन्ति । परितः विद्यमानायाः सुन्दरप्रकृत्याः आस्वादनं कुर्वन्ति च । यदा ते गुहायां जायमानस्य प्राकृतिकपरिवर्तनस्य प्रक्रियां पश्यन्ति तदा आनन्दस्य उत्तुङ्गं शिखरं प्राप्नु-वन्ति । हिममयं शिवलिङ्गं, तत्रत्यं वातावरणं च अलौकिकम् आनन्दं जनयति'' इति प्राध्यापकः देवनाथः कथां समापितवान् ।

सूर्यास्तः जातः आसीत् । सरोवरस्य तीरे अन्धकारः प्रसरन् आसीत् । प्रतिनिवर्तनसमयः सन्निहितः इति ज्ञापयति स्म सः ।

प्रकृत्याः विषये अधिकां प्रीतिं प्राप्य ते सर्वे ततः गतवन्तः ।



# गुजरात्राज्यीया जानपदकथा

## गुजरात् - पूर्वम् इदानीं च

'गुज्जरराष्ट्र'शब्दतः 'गुजरात्'शब्दः उत्पन्नः । गुज्जरजनजातिः कश्चन आदिवासि-जनजातिः । क्रिस्तीये पञ्चमे शतके हूणैः सह एते भारतम् आगतवन्तः इति श्रूयते ।

किन्तु गुजरातस्य इतिहासकालः इतोऽपि पूर्वतनः । तत्राम क्रिस्तस्य जन्मनः द्विसहस्र-वर्षेभ्यः पूर्वं हरप्पन्संस्कृतेः ये अवशेषाः प्राप्ताः ते आसन् गुजरात्राज्ये स्थिते कच्छ्मरुस्थले । भगवान् कृष्णः मथुरां परित्यज्य सौराष्ट्रे स्थितायां द्वारकायाम् अवसत् इति श्रूयते ।

गुजरात्राज्यस्य उदयः १९६० तमे वर्षे मे-मासस्य प्रथमे दिने अभवत् । मुम्बयी-राज्यस्य पुनर्घटनम् अपि तस्मिन् एव दिने अभवत् । एतस्य राज्यस्य पश्चिमदिशि अरेबियन्समुद्रः, उत्तरभागे पाकिस्थानदेशः राजस्थानराज्यं च, वायव्येशान्यभागयोः मध्यप्रदेशः, दक्षिणभागे महाराष्ट्रराज्यं च अस्ति ।

समग्रस्य राज्यस्य विस्तीर्णता १९६,००० कि.मी. परिमिता । भारतस्य ६.१ प्रतिशतभागः गुजरातस्य । अत्रत्या जनसंख्या २००१ वर्षस्य जनगणनानुसारं ५,०५,९६,९९२ मिता । जनसंख्यादृष्ट्या नवमं स्थानम् एतस्य राज्यस्य ।

# चातुर्यस्य विक्रेता बालकः

पूर्वं गुजरात्राज्ये कस्मिंश्चित् नगरे कश्चन बालकः निवसति स्म । तस्य नाम विपुलः । यदा सः अल्पवयस्कः आसीत् तदा एव तदीयः पिता दिवङ्गतः । उपजीविकार्थं धनं किमपि न आसीत् विपुलस्य । किन्तु सः पित्रा क्रियमाणं वाणिज्यम् अवलोकयन् बहु ज्ञातवान् आसीत् । एकदा सः एकम् उत्तमम् उपायं चिन्तितवान् ।

विपुलः किञ्चित् धनम् ऋणरूपेण स्वीकृत्य



# करकौशलोद्यमः



गुजरातराज्यस्य करकौशलोद्यमः नितरां प्रसिद्धः । तत्रापि 'बन्धनी - बन्धेज्' वस्तूनि तावत् अतिप्रसिद्धानि । वस्त्रनिर्माणक्षेत्रे अपि गुजरातराज्यस्य ख्यातिः अस्ति । विविधाः गणितीयाकृतयः तत्र वस्त्रेषु चित्ताकर्षतया चित्र्यन्ते । सूरतनगरे 'झरी' कार्यं 'मक्षु' कार्यं च प्राधान्येन प्रचलति ।

अस्मिन् राज्ये चलाक्, सलैया, कंग्री, टिक्की, कटोरी इत्यादयः 'एम्ब्रायडरी'-आकृतयः प्राधान्येन रच्यन्ते वस्त्रेषु । 'कच्छ्' प्रदेशे तु प्राधान्येन वस्त्रेषु शाटिकासु च दर्पण-खण्डयोजनपुरस्सरं आलङ्कारिकरचनाः चित्र्यन्ते ।



विपण्याम् एकं लघु आपणम् आरब्धवान् । आपणे विरेखानि कागदानि प्रसार्य तत्र लेखनीं, मषीपात्रं च स्थापितवान् सः । पार्श्वे 'अत्र चातुर्यस्य विक्रयणं क्रियते' इति फलकम् अपि स्थापितम् ।

तत्रत्याः वणिजः विक्रीयमाणानां वस्तूनां नामानि उच्चध्वनिना सूचयन्ति स्म । तत्र विविध-वस्तूनाम् आपणाः आसन् । तत्र अमूल्यानां वस्त्राणां यथा, तथैव बान्धेज्, झरी, पटोला इत्यादीनाम् आपणाः अपि आसन् । क्रीडनकानाम् आपणाः अपि तत्र आसन् । तेषु प्रेङ्खाः, आसन्दाः इत्यादयः विक्रीयन्ते स्म । जनप्रियं खाद्यभाण्डारम् अपि तत्र आसीत् । तत्र अत्यधिकं विक्रयणं प्रचलति स्म । तत्र कमम्, ढोकला, पथरा, खाण्ड्वी, फर्साणा इत्यादीनि खाद्यानि उष्णकुण्डलिकाः, दूधपाक्, श्रीखण्डप्रभृतीनि मधुराणि च उपलभ्यन्ते स्म ।

शाकाः, धान्यानि, सुगन्धद्रव्याणि, मधुराणि, गृहोपयोगीनि वस्तूनि इत्यादीनि सर्वविधवस्तूनि तत्र लभ्यन्ते स्म । एवं जनाः ग्रहीतुम्, अनुभवितुम्, आस्वादयितुम्, आघ्रातुं वा यादृशान् इच्छेयुः तादृशाः सर्वे पदार्थाः तत्र आसन् । किन्तु चातुर्यस्य विक्रयणं न श्रुतपूर्वम् आसीत् जनैः । 'कः स्यात् एषः अपरिचितः चातुर्यस्य विक्रेता ? अयं कश्चन वञ्चकः स्यात्' इति भावयन्तः जनाः तस्य उपेक्षां कृतवन्तः । विपुलः विचलितः न अभवत् । सः प्रतिदिनम् आपणे उपविश्य 'अत्र चातुर्यस्य विक्रयणं भवति' इति वदन् जनान् आह्वयति स्म ।

बुधनाथनामकः कश्चित् धनिकपुत्रः कदाचित् तेन मार्गेन गच्छन् आसीत् । सर्वदा पित्रा 'मूर्खः' इति तस्य तर्जनं क्रियते स्म । सः विपुलस्य आपणस्य पुरतः किञ्चित्कालं स्थित्वा आपणं परीक्षादृष्ट्या दृष्ट्वा - ''किम् अस्ति अत्र ?'' इति पृष्टवान् ।

विपुलः अवदत् - ''चातुर्यम्'' इति ।

बुधनाथः चिन्तितवान् - 'पितुः तोषणार्थम् उत्तमः उपायः लब्धः' इति । अतः सः विपुलं विचारितवान् - ''हस्तपरिमितस्य चातुर्यस्य किं मूल्यम् ?'' इति ।

विपुलः अवदत् - ''चातुर्यस्य विक्रयणं हस्तपरिमाणेन न भवति । गुणवत्ताम् अवलम्ब्य तस्य विक्रयणं भवति' इति ।

वस्तुतः अधिकं किमपि न जानाति स्म बुधनाथः । अतः सः अवदत् - ''एवं तर्हि एकरूप्यकमूल्यकं चातुर्यं ददातु'' इति ।

विपुलः एकं कागदखण्डं स्वीकृत्य तस्य उपरि **'यत्र द्वयोः कलहः प्रचलति तत्र न स्थातव्यम्'** इति. लिखित्वा बुधनाथाय दत्तवान् । बुधनाथः 'धन्यवादाः' इति सन्तोषेण वदन् कागदं पुटीकृत्य स्वस्य उष्णीषे सुरक्षितं स्थापितवान् । स्वस्य निर्णयेन सन्तुष्टः सः आनन्देन ततः निर्गतवान् ।

यदा सः गृहं प्रति गतवान् तदा तस्य पिता विपण्यां पुत्रेण कृतं क्रयणं ज्ञात्वा - ''भोः, भवतः मूर्खतायाः सीमा एव नास्ति । कश्चन वञ्चकः भवते चातुर्यं विक्रीतवान्, भवान् च क्रीतवान् । चातुर्यं क्रयणयोग्यं वस्तु न इति किं भवान् न जानाति ? धिङ् मूर्ख !'' इति सम्यक् तर्जितवान् ।

ततः सः पुत्रेण सह विपणिम् आगत्य विपुलस्य आपणम् आगतवान् । ''अये धूर्त ! मम पुत्रस्य अल्पज्ञत्वस्य दुरुपयोगः स्वीकृतः भवता । भवन्तं राजास्थानं नीत्वा दण्डनं कारयिष्यामि । शृगालमते ! मन्दमतीन् सम्यक् वञ्चयति भवान्'' इति बहुधा विपुलं तर्जितवान् सः ।

तदा विपुलः शान्ततया उक्तवान् - ''किम् एतादृशेन तर्जनेन ? यदि मया दत्तम् उपदेशवचनं भवतः तृप्त्यै न जातं तर्हि तत् प्रत्यर्प्य धनं प्रतिप्राप्तुम् अर्हति भवान्'' इति ।

'मम पुत्रेण मूर्खताम् आचरता यः धननाशः कृतः तं समीकर्तुम् एषः सुयोग्यः अवसरः' इति विचिन्त्य सः धनिकः - ''स्वीकरोतु एतत् भवतः चातुर्यम्'' इति वदन् विपुलस्य पुरतः

## उत्सवाः

गुजरातराज्यस्य उत्सवाः अपि विशिष्टाः एव । प्रतिवर्षं मकरसङ्क्रान्तिपर्वावसरे कर्णावत्याम् (अहमदबादनगरे) 'वाताटोत्सवः' आचर्यते । एतच्च पर्व जनवरीमासस्य १४ दिनाङ्के भवति । प्रपञ्चस्य नानाभागेभ्यः आगताः भागग्राहिणः एतस्यां स्पर्धायां भागं वहन्ति ।



अपरः प्रसिद्धः उत्सवः 'त्रिणेत्रेश्वर-महादेवपर्व' । एषः तर्नेतर्प्रदेशे प्रचलति । महाभारते वर्ण्यमानः द्रौपद्याः स्वयंवरः अत्रैव प्रवृत्तः इति श्रूयते ।

राजस्थाने पुष्करमेला यथा प्रचलति तथा 'वौथा'नगरे प्रतिवर्षं 'जन्तुमेला' प्रचलति । एषः प्रदेशः साबरमती-वत्रकतद्योः मध्ये अस्ति ।

एतस्यां मेलायां गर्दभानां क्रयविक्रयः प्रचलति प्राधान्येन ।



एकं कागदखण्डं क्षिप्तवान् ।

''मया न एषः कागदखण्डः विक्रीतः । मया तु चातुर्यं विक्रीतम् । मया सूचितं चातुर्यवचनं भवतः पुत्रेण कदापि न उपयोक्तव्यम् । तथा तेन प्रतिज्ञा अपि करणीया । उभयोः कलहः यत्र प्रचलति तत्र अवश्यं स्थातव्यं च'' इति उक्तवान् विपुलः ।

तावता तत्र बहवः सम्मिलिताः । 'विपुलस्य कथनं युक्तम् एव अस्ति' इति उक्तवन्तः ते । अतः धनिकः प्रतिज्ञां कृतवान् यत् विपुलेन यत् चातुर्यवचनं दत्तं तदनुगुणं मम पुत्रः व्यवहारं कदापि न करिष्यति इति । ततः विपुलः तस्मै तत् रूप्यकनाणकं प्रतिदत्तवान् ।

तस्य देशस्य राज्ञः पत्नीद्वयम् - रूपवती तारावती चेति । ते उभे अपि परस्परकलहे निरते भवतः स्म । कचित् तयोः बाहुयुद्धम् अपि प्रचलति स्म । अतः अन्यस्याः पराजयार्थं सर्वदा अवसरं प्रतीक्षमाणे भवतः स्म ते ।

अथ कदाचित् बुधनाथः विपणिं प्रति प्रस्थितवान् । पूर्वोक्ते उभे महिले अपि विपणिम् आगते आस्ताम् । उभे अपि एकम् एव आपणं गतवत्यौ । एकस्मिन् एव कूष्माण्डे तयोः दृष्टिः पतिता । उभे अपि तत् एव कुष्माण्डं क्रेतुम् इष्टवत्यौ । 'एतादृशम् एव अन्यत् क्रीतं चेदपि न कोऽपि भेदः' इति आपणिकः बोधितवान् । तथापि तयोः विचारे परिवर्तनं न जातम् । महान् कलहश्च आरब्धः ।

बुधनाथः यद्यपि मन्दमतिः, तथापि वचनपालकः तु आसीत् एव । पित्रा विपुलाय दत्तं वचनं स्मरन् सः तयोः महिलयोः कलहं पश्यन् तत्रैव स्थितवान् । ते परस्परं ताडनं, नखैः पीडनं च कृतवत्यौ । अत्रान्तरे एकस्याः दृष्टिः बुधनाथे पतिता । सा बुधनाथम् अवदत् - ''एतया एव कलहः आरब्धः इत्यत्र भवान् एव मम साक्षी'' इति ।

तदा अपरा उक्तवती - ''भवान् ममैव साक्ष्यं वदेत् । एषा आदौ मां केशैः गृहीत्वा पातितवती'' इति ।

एतावता ते प्रासादे करणीयानि कार्याणि स्मृतवत्यौ । अतः ते बुधनाथेन सह प्रासादं प्रति गतवत्यौ । स्वप्रकोष्ठं प्रविश्य सखीनां पुरतः प्रवृत्तं निवेदितवत्यौ उत्प्रेक्षाशपूर्वकम् । ततः उभयोः अपि पक्षयोः समर्थकाः अधिकाः जाताः । उभयपक्षीयाः अपि बुधनाथम् एव साक्षित्वेन परिगणयतः स्म ।

एतदनन्तरं विवादः महाराजसमीपं गतः । उभे अपि अन्यस्याः व्यवहारे दोषम् आरोप्य बुधनाथं साक्षित्वेन दर्शितवत्यौ । अतः राजा बुधनाथम् आज्ञापितवान् - ''भवान् एव एतं

विवादं परिहरतु'' इति ।

इदानीं बुधनाथः कष्टे पतितः । 'विवदमानयोः महिलयोः मध्ये भवता किमर्थं स्थितम् ?' इति पुत्रं तर्जितवान् पिता । किन्तु समस्यापरिहारार्थम् अपरः मार्गः कोऽपि न आसीत् । अनन्यगतिकतया पिता विपुलसमीपम् एव गतवान् । विपुलः प्रवृत्तं समग्रं श्रुत्वा उक्तवान् - ''एतस्याः समस्यायाः परिहारोपायः मम समीपे अस्ति । किन्तु तस्य



मूल्यम् अधिकम् । पञ्चशतं रजतनाणकानि दातव्यानि तदर्थम्'' इति ।

किं वा कर्तुं शक्नुयात् पिता ? धनदानम् अङ्गीकृतवान् सः । तदा विपुलः उक्तवान् - ''बुधनाथेन उन्मत्तेन इव व्यवहारः करणीयः । तदा बुधनाथस्य वचनम् अवलम्ब्य राजा किमपि निर्णेतुम् अशक्नुवन् तं प्रेषयिष्यति । राज्ञ्यौ अपि कुपिते न भवतः'' इति ।

धनं दत्त्वा ततः गतः बुधनाथः विपुलस्य कथनस्य अनुगुणं व्यवहृत्य कष्टात् मुक्तः जातः । किन्तु तदनन्तरकाले अपरा समस्या बुधनाथपितुः पुरतः उपस्थिता - 'मम पुत्रस्य बुद्धिः सम्यक् अस्ति इति राजा यदि जानीयात् तर्हि निश्चयेन महत् कष्टं भवेत्' इति । अतः तौ पुनरपि विपुलस्य समीपं गतवन्तौ ।

''एषा अपि समस्या परिहारायोग्या तु सर्वथा न । एतस्याः परिहारार्थं वचनम् आवश्यकं चेत् भवता पञ्चशतं रूप्यकाणि पुनरपि दातव्यानि भवेयुः'' इति उक्तवान् विपुलः ।

धनिकः पुनरपि पञ्चशतं रूप्यकाणि दत्तवान् । ततः विपुलः अवदत् - ''यदा महाराजः प्रसन्नः तिष्ठति तदा प्रवृत्तं सर्वं निवेदनीयम् । सर्वं श्रुत्वा राजा हसिष्यति, क्षमां दर्शयिष्यति च । किन्तु सः यदा प्रसन्नचित्तः भवति तदा एव एतत् करणीयम् इति तु न विस्मर्तव्यम्'' इति ।

धनिकः बुधनाथः च तथैव कृतवन्तौ । राजा सर्वं ज्ञात्वा उच्चैः हसित्वा क्षमां दर्शितवान् । किन्तु सर्वस्य श्रवणस्य अनन्तरं राज्ञः मनसि कुतूहलम् उत्पन्नम् - चातुर्यविक्रेता सः विपुलः कीदृशः स्यात् इति मया द्रष्टव्यम् इति ।

अतः सः विपुलम् आनायितवान् । उपस्थितं तम् अवदत् राजा - ''भवान् चातुर्यं विक्रीणीते इति श्रुतम् । किं मम निमित्तम् अपि तत् कर्तुं शक्येत ?'' इति ।

''किन्तु मम चातुर्यं महार्घं श्रीमन् !'' इति उक्तवान् विपुलः ।

''अस्तु नाम । किं मूल्यं स्यात् तस्य ?'' इति पृष्टवान् राजा ।

''पञ्चसहस्रं रूप्यकाणि'' इति धैर्येण उक्तवान् विपुलः ।

''एवम् ! भवतु नाम, यदि भवतः चातुर्य-वचनस्य गुणवत्ता उत्तमा स्यात् तर्हि अहं तावत् मूल्यं दातुं सिद्धः अस्मि एव'' इति अवदत् राजा ।

विपुलः एकं वाक्यं लिखितवान् । तत् आसीत् – **''कस्यचित् कार्यस्य करणात् पूर्वं सम्यक् चिन्तनीयम्''** इति ।

राजा विपुलाय पञ्चसहस्रं रूप्यकाणि दत्तवान् । ततः तत् वाक्यं प्रासादे सर्वत्र लेखितं तेन । यत्र यत्र दृष्टिः प्राधान्येन पतेत् तत्र सर्वत्र तदेव वाक्यं दृश्यते स्म ।

एतस्याः घटनायाः अनन्तरं कदाचित् राजा अस्वस्थः जातः । राज्ञी रूपवती मन्त्री च समालोच्य निर्णीतवन्तौ यत् उपायेन राजा मारणीयः इति । अतः तौ उत्कोचदानेन राजवैद्यं वशीकृत्य औषधे विषं संयोज्य राज्ञे दापितवन्तौ । औषधपानात् पूर्वं राज्ञा विपुलस्य वचनम् अकस्मात् दृष्टम् । सः औषधसेवनं परित्यज्य चिन्तने मग्नः अभवत् ।

एतत् दृष्टवतः राजवैद्यस्य हृदये भीतिः उत्पन्ना । 'मया कृतः अपराधः महाराजेन ज्ञातः अस्ति । अतः एव सः पानं परित्यज्य चिन्तयति । अद्य मम मरणदण्डनं निश्चितम् । किन्तु यदि अहं महाराजं क्षमां प्रार्थयेयं तर्हि प्राणरक्षणं वा भवेत्' इति विचिन्त्य सः राज्ञः पादयोः पतित्वा प्रार्थितवान् – ''महाराज ! क्षन्तव्यः अहम्'' इति ।



एतत् श्रुत्वा राजा आश्चर्यचकितः । यदा वैद्यस्य मुखात् प्रवृत्तं समग्रं ज्ञातं तदा सः नितरां कुपितः । मन्त्रिणः राज्ञ्याः च वधः तेन आदिष्टः । राजवैद्यः च तेन देशात् बहिष्कृतः ।

ततः राजा विपुलम् एव मन्त्रिपदे नियुक्तवान् । विपुलः राज्यशासने योग्यं मार्गदर्शनं कुर्वन् बहूनि वर्षाणि सुखेन जीवितवान् ।

*पुनर्लेखनम्* – **उमा रामन्**
(*मूलम्* – भारतीयाः जानपदकथाः ले.
– ए.के.रामानुजन् )

## प्रवासयोग्यस्थलानि

यदि भवन्तः गुजरातराज्यं गच्छन्ति तर्हि द्वारका तु अवश्यं द्रष्टव्या एव । अत्रैव कृष्णः न्यवसत् इति वदन्ति इतिहासग्रन्थाः । इदानीं या द्वारका रचिता सा षष्ठी । इतः पूर्वं पञ्चवारं रचितानि नगराणि समुद्रे लीनानि इति श्रूयते । इदानीं यत् द्वारकाधीशमन्दिरम् अस्ति तत् २५०० वर्षेभ्यः पूर्वं निर्मितं स्यात् इति ऊह्यते ।

'कच्छ्'प्रदेशे स्थिते 'लोथाल्' इत्यत्र हरप्पाकालीनाः अवशेषाः प्राप्ताः सन्ति । एतादृशाः अवशेषाः यत्र प्राप्ताः तेषु लोथाल् हरप्पन् च अतिप्राचीनतमौ ।

# कथक्कली

## भारतीयः नृत्यप्रकारः

देवदेवताः यक्षराक्षसादयः च इतस्ततः सञ्चरन्ति । परितः गाढः अन्धकारः । उन्नतः कांस्यदीपः कश्चन तम् अन्धकारं निवारयन् नृत्यकारं, नृत्यपरिकरान्, नृत्यकारस्य अलङ्कारं च परिदर्शयति ।

एतत् 'कथक्कली'नृत्यस्य किञ्चन दृश्यम् । दक्षिणभारतीये केरले अयं नृत्यप्रकारः नितरां जनप्रियः । 'कथक्कली' शब्दस्य अर्थः - 'कथानृत्यम्' इति । अत्र साम्प्रदायिकनृत्येन सह कथा अपि निरूप्यते । त्रिशतवर्षपुरातनम् एतत् । एतस्यां नवमशतकीयस्य 'कुडियाट्टं'नामकस्य कलाप्रकारस्य प्रभावः विशेषतः अस्ति । 'कुडियाट्टं'कलाप्रकारश्च युनेस्को-(UNESCO)संस्थया मानितः अस्ति । अयमपि कलाप्रकारः केरलीयः एव ।

कथक्कल्यां या कथा स्वीक्रियते सा प्रायः पुराणेतिहासादिभ्यः चीयते ।

यद्यपि कथक्कली कथानृत्यम् अस्ति तथापि तत्र किमपि पात्रं न वदति । पृष्ठभूमिकायां गायकानां गणः कश्चन गानरूपेण कथां निरूपयति । तदवसरे अर्थानुगुणं हस्तादीन् चालयन् मुखादीनां साहाय्येन भावम् अभिव्यञ्जयति नृत्यकारः । हस्तादिचालनं 'मुद्रा' इति उच्यते ।



कथक्कल्यां ७०० मुद्राः उपयुज्यन्ते । तासां संयोजनात् २४ नृत्यप्रकाराः सम्भवन्ति । उत्तमः नृत्यप्रकारः १७ प्रकारैः नेत्रतारकां चालयितुं समर्थः इति श्रूयते । भ्रुवोः सञ्चालनं सप्तभिः प्रकारैः, पक्ष्मणः सञ्चालनम् अष्टभिः प्रकारैः च क्रियते नृत्यकारेण । एवं नृत्यप्रकारः मुखावयवचालने सुनिपुणः भवति । तस्य कौशलं द्रष्टृषु आश्चर्यं जनयति ।

एतावत्पर्यन्तं पुरुषाणाम् एव प्रवेशः दृश्यते स्म अत्र । किन्तु इदानीं महिलानाम् अपि प्रवेशः दृश्यते एव ।

### *नृत्यकाराणाम् अलङ्कारः*

नृत्यकाराणाम् अलङ्कारसमये ओष्ठ-भ्रू-पक्ष्मादीनां विषये विशेषप्राधान्यं कल्प्यते । नायकः, उपनायकः, खलनायकः, देव्यः, ऋषिः, राजा, महिला इत्यादिषु एकैकस्यापि वेषभूषादयः विभिन्नाः विशिष्टाः च । वेषसज्जाकार्यम् अधिकसमयव्ययम्



अपेक्षते । एकस्य प्रदर्शनस्य निमित्तं नृत्यकारः ४-५ घण्टाः यावत् आत्मनः वेषसज्जां करोति ।



हरिद्वर्णः सद्भावं द्योतयति । रक्तवर्णः क्रोधं बलात्कारं च द्योतयति । कृष्णवर्णं दैत्यशक्तिं तामसस्वभावं च सङ्केतयति । पीतवर्णः आश्चर्यं, श्वेतवर्णः परिशुद्धतां च निरूपयति । एतेषां विविधवर्णानां सम्मिश्रणं नृत्ये पात्रस्य विविधभावानां सम्मिश्रणं प्रदर्शयति ।

नृत्यकारस्य नेत्रे कज्जलेन विस्तारीक्रियेते । 'चन्द'नामकस्य पुष्पस्य रसः नेत्रयोः योज्यते । एतस्य कारणतः नृत्यकारस्य नेत्रे रक्तवर्णतया प्रकाशेते । द्रष्टृषु एतस्य वर्णनातीतः परिणामः जायते । मुखालङ्कारस्य आरम्भात् पूर्वं नृत्यकारः स्वस्य मुखं स्वच्छतया प्रक्षाल्य मुखे चन्दनरसं लिम्पति । ततः सः भूमौ उन्मुखतया शेते । तदनन्तरं वर्णकारः तदीयमुखस्य अलङ्कारं करोति ।



एषः नृत्यप्रकारः मन्दिरस्य प्राङ्गणे प्रदर्श्यते प्रायः । रात्रौ विलम्बेन नृत्यस्य आरम्भः भवति । उषःकालपर्यन्तं तत् अनुवर्तते च । चेरुतुरत्तीनगरे 'केरलकलामण्डलं' संस्थाप्य कविः वेल्लत्तोल नारायण मेनन्वर्यः कथक्कल्याः जनप्रियतां वर्धितवान् ।

एषु दिनेषु कथक्कली रङ्गमन्दिरेषु प्रदर्श्यते सायङ्काले अपि क्वचित् । कथाद्वारा बैबल्कथादयः (मडगालेनीया मेरी) अपि प्रदर्श्यन्ते क्वचित् ।

कथाक्कलीनृत्यप्रकाराः मुखालङ्कारार्थं प्राकृतिकवर्णानाम् एव उपयोगं कुर्वन्ति, न तु रसायनिकान् । पीत-रक्त-श्वेत-कृष्ण-हरितादयः वर्णाः तैः कथं प्राप्यन्ते इति आश्चर्यं वा भवताम् ? नारिकेलतैलमिश्रणेन ते वर्णचूर्णानां द्रवमयतां सम्पादयन्ति ।

सुधाचूर्णेन (काल्शियम् कार्बोनेट्) ते श्वेतवर्णतां प्राप्नुवन्ति ।

सुधाचूर्णेन हरिद्राचूर्णं मिश्रीकृत्य ते रक्तवर्णचूर्णं प्राप्नुवन्ति ।

हरिद्वर्णमयानां पर्णानां चूर्णं कृत्वा सुधाचूर्णेन मिश्रीकृत्य हरिद्वर्णं प्राप्नुवन्ति ते ।

नारिकेलस्य बाह्यावरणं दग्ध्वा चूर्णीकृत्य नारिकेलतैलेन मिश्रीकृत्य कृष्णवर्णचूर्णं प्राप्नुवन्ति ते । हरिद्राचूर्णं तु पीतवर्णतां ददाति स्म । एवं विविधाः वर्णाः तैः प्राप्यन्ते प्राकृतिकतया एव ।

# वास्तविकं मूल्यज्ञानम्

सूफीश्रेष्ठानां विषये भवन्तः श्रुतवन्तः स्युः एव । एते इस्लामिक्परम्परायाः अनुयायिनः । विश्वभ्रातृत्वस्य, परस्परप्रेम्णः च बोधयितारः एते । जीवने सर्वैः अपि यथा तथैव सूफीश्रेष्ठैः अपि परजनकृता निन्दा सम्मुखीकरणीया एव भवति स्म ।

कस्मिंश्चित् ग्रामे कश्चन तरुणः निवसति स्म । सर्वदा सूफीश्रेष्ठानां निन्दनम् एव तस्य कार्यम् । ग्रामे सर्वे तस्य एतं स्वभावं जानन्ति स्म । दीर्घवादे सः अत्यासक्तः आसीत् । अतः कोऽपि तेन सह वादं कर्तुं, तस्य अभिप्रायं खण्डयितुं वा न इच्छति स्म ।

एकदा कश्चन सूफीश्रेष्ठः निश्चितवान् यत् एतस्य तरुणस्य अभिप्राये परिवर्तनम् आनेतव्यम् इति । अतः सः कदाचित् स्वस्य एकम् अङ्गुलीयकं निष्कास्य तस्मै तरुणाय दत्त्वा अवदत् - "विपण्याम् एतत् पञ्चशतरूप्यकैः विक्रीय आगच्छतु" इति ।

'एतत् न कष्टकरं कार्यम्' इति चिन्तयन् तरुणः झटिति विपणिं गतवान् । विपण्यां कोऽपि तस्य अङ्गुलीयकस्य क्रेता न लब्धः । काचित् महिला उक्तवती - "दशभिः रूप्यकैः अहम् एतत् क्रेतुं सिद्धा । तदपि मम पुत्रः एतत् इच्छेत् इति बुद्ध्या एव" इति । निराशः तरुणः सूफीश्रेष्ठसमीपं प्रत्यागतः ।

सूफीश्रेष्ठः तं पुनः उक्तवान् - "कस्यचित् सुवर्णकारस्य समीपं गत्वा एतस्य किं मूल्यं स्यात् इति विचार्य आगच्छतु" इति ।

तरुणः कस्यचित् स्वर्णकारस्य समीपं गतवान् । स्वर्णकारः तत् अङ्गुलीयकं परीक्ष्य भारं चापि दृष्ट्वा अवदत् - "एतस्य मूल्यं पञ्चसहस्ररूप्यकमितम्" इति ।

तरुणः प्रत्यागत्य यदा प्रवृत्तं सर्वम् अवदत् तदा सूफीश्रेष्ठः अवदत् - "विपण्यां स्थिता महिला एतस्य अङ्गुलीयकस्य मूल्यस्य विषये यावत् जानाति तावदेव भवान् जानाति सूफीश्रेष्ठानां योग्यतायाः विषये" इति ।

सः तरुणः लज्जितः सन् वस्तुस्थितिम् अवगतवान् ।



भारतीयानि पर्वाणि

# 'दशहरा'

## विजयोत्सवनिमित्तकं पर्व

वैभवेन, आडम्बरेण, वैविध्येन च प्रायः सर्वान् उत्सवान् अतिशेते 'दशहरा'। आश्वयुजमासे (तन्नाम सप्टम्बर्मासे अक्टोबर्-मासे वा) एषः उत्सवः आचर्यते। भगवती दुर्गा राक्षसं महिषासुरं जितवती यत् तां घटनां निमित्तीकृत्य एषः उत्सवः आचर्यते।

महिषासुरः भगवन्तं शिवं तपसा सन्तोष्य वरं प्राप्तवान् यत् कोऽपि देवः मां संहर्तुं न शक्नुयात् इति। अपूर्वं वरं प्राप्य दुष्टः सः सामान्यानां जनानां पीडनम् आरब्धवान्। राक्षसराजस्य तस्य संहाराय सर्वे देवाः स्वशक्तेः कञ्चन भागं समर्प्य एकां देवीं सृजेयुः इति निर्णयं कृतवन्तः देवप्रमुखाः। एतदनुगुणं जाता देवी एव 'दुर्गा' नाम।



शक्तिशालिभिः बाहुभिः, अपूर्वैः आयुधैः च उपेता दुर्गा महिषासुरं लीलया मारितवती। एतस्मिन् युद्धे तया अन्येऽपि राक्षसाः संहृताः।

केषुचित् प्रदेशेषु अयम् उत्सवः नवरात्रात्मकः। महालय-अमावास्यातः एतस्य आरम्भः। 'नवरात्रोत्सवः' इति एतस्य अन्वर्थं नाम। दशमे दिने उत्सवस्य समाप्तिः। तच्च दिनम् उच्यते 'विजयदशमी' इति। नूतनस्य कार्यस्य आरम्भाय एतत् विजयदशमीदिनम् अतिप्रशस्तम् इति भाव्यते जनैः।

देशस्य अन्येषु भागेषु दशमम् अपि दिनम् उत्सवस्य अङ्गत्वेन एव परि-गण्यते। अतः उत्सवः दशदिनात्मकः

भवति । अतः एव 'दशहरा' इति निर्दिश्यते अयम् । 'दशाहः' इत्येतस्य संस्कृतशब्दस्य अपभ्रंशः स्यात् 'दशहरा' इत्येषः शब्दः ।

## पश्चिमवङ्गराज्ये दुर्गापूजा

भवतां माता विरामकाले मातृगृहं प्रति गच्छति खलु कदाचित् ? तथैव देवी पार्वती अपि परिवारजनैः सह स्वस्य मातापितृगृहं हिमालयं गच्छति प्रतिवर्षम् इति बङ्गालीयाः विश्वसन्ति । दुर्गामातुः प्रवासं निमित्तीकृत्य पश्चिमवङ्गराज्ये दुर्गापूजा आचर्यते तैः ।

समग्रे राज्ये विशालान् मण्डपान् निर्माय दुर्गा, लक्ष्मीः, सरस्वती, गणेशः, कार्तिकेयः इत्यादीनां महामूर्तीः प्रतिष्ठाप्य सम्यक् अलङ्कृत्य पूज्यन्ते । दुर्गायाः पादस्य समीपे वाहनभूतः सिंहः पादौ प्रसार्य तिष्ठति । दुर्गायाः पादस्य अधः महिषासुरः पतितः दृश्यते । दुष्टशक्तिं विरुध्य सच्छक्त्या प्राप्तं जयं सङ्केतयति एतत् दृश्यम् ।

सप्तमे दिने तन्नाम महासप्तमीदिने, दुर्गापूजायाः आरम्भः । अष्टमे दिने, तन्नाम महाष्टमीदिने, विशेषपूजा प्रचलति । पूजासमये भेरीपटहादीनां पारम्परिकवाद्यानां वादनं प्रचलति ।

विजयदशमीदिने सम्यगलङ्कृते वाहने एताः मूर्तीः संस्थाप्य वाद्यादीनां वादनपूर्वकं वर्णमयशोभायात्रा निर्वर्त्यते । बङ्गालीयाः वनिताः देव्याः साम्प्रदायिकम् आप्रच्छनोत्सवं यत् आचरन्ति तत् उच्यते – *'सिन्धूरकेल्ला'* इति । विजयदशमीदिने बह्व्यः गृहिण्यः पूजामण्डपे सम्भूय देव्याः ललाटे सिन्धूरतिलकम् अर्पयन्ति । ताः देव्याः मुखे मधुरखाद्यखण्डं निक्षिप्य हस्ते ताम्बूलं समर्पयन्ति । अग्रिमे वर्षे 'पुनरागमनार्थाय गच्छ देवि यथासुखम्' इति वदन्ति च । ततः परस्परं सिन्धूरं धारयन्ति अपि ताः शुभाशंसनसङ्केतरूपेण ।

## 'दसरा' मैसूरुनगरे



मैसूरुनगरस्य प्रातिवार्षिकः 'दसरा'-उत्सवः नितरां सुप्रसिद्धः । चतुर्दशे शतके हम्पीनगरे स्थितः विजयनगरराजः कृष्णदेवरायः एताम् उत्सवाचरणपरम्पराम् आरब्धवान् इति श्रूयते ।

अन्तिमः विजयनगरराजः एतस्य उत्सवस्य आचरणदायित्वं मैसुरीयाय मुम्मडि कृष्णराजवोडेयराय समर्पितवान् । आङ्ग्लशासनतः

पूर्वं वोडेयर्शासनकाले एषः 'दसरा'-उत्सवः महता वैभवेन आचर्यते स्म । उत्सवदिने सायङ्काले सैन्याधिकारिणः अन्ये ज्येष्ठाधिकारिणः च शोभायात्रायां भागं गृह्णन्ति स्म । प्रसिद्धाः सङ्गीतकाराः, नृत्यकाराः, मल्लयुद्धपटवः, कलाकाराः चापि शोभायात्रायां भागं वहन्ति स्म । एवम् एव अलङ्कृताः गजाः, अश्वाः, उष्ट्राः चापि तत्र भागं वहन्ति स्म । शतघ्न्यः, भुशुण्ड्यः, सुवर्णरजतादिभिः अलङ्कृताः रथाः इत्यादयः शोभायात्रायाः वैभवं वर्धयन्ति स्म ।

महाराजः राजगजस्य उपरि स्थापितस्य सुवर्णसिंहासनस्य उपरि उपविश्य अग्रेसरः भवति स्म शोभायात्रायाः । राजाङ्गणे राजा पूजां समर्पयति स्म । पवित्रः नन्दिस्तम्भः समग्रायाः शोभायात्रायाः मुख्यम् आकर्षणं भवति स्म । यात्रावसरे मध्ये मध्ये नृत्यादयः प्रवर्तन्ते स्म । लक्षशः जनाः मार्गम् उभयतः पङ्क्तिशः स्थित्वा एतां शोभायात्रां महत्या आसक्त्या पश्यन्ति स्म ।

महाराजकालीनं महावैभवं गाम्भीर्यं च यद्यपि एषु दिनेषु दसरा-उत्सवशोभायात्रायाः न भवति, तथापि अद्यापि सा च यात्रा वैभवेन तु आचर्यते एव ।

## हिमाचलप्रदेशे दशहरोत्सवः

हिमाचलप्रदेशस्य कुलूखाते 'दशहरा'-पर्वणः आचरणं स्वकीयया विशिष्टया शैल्या आचर्यते । तत्रत्याः स्वधार्मिकपद्धत्यनुगुणं तत् पर्व आचरन्ति । भगवतः रघुनाथस्य सुवर्णमयी रजतमयी वा मूर्तिः शोभायात्रया नीयते तत्र ।

### रामलीला



भगवान् श्रीरामः रावणं जितवान् यत् तत् निमित्तीकृत्य उत्तरभारतीयेषु राज्येषु 'दशहरा' आचर्यते । 'रामलीला'नाम्ना रामस्य कथा नाटकसङ्गीतादिप्रकारैः जानपदशैल्या उच्यते । राक्षसराजस्य रावणस्य, तत्सहोदरस्य कुम्भकर्णस्य, तत्पुत्रस्य इन्द्रजितः च प्रतिकृतिमूर्तिं निर्माय जनाः अग्निसात्कुर्वन्ति ।

## नवरात्रोत्सवः तमिळुनाडुराज्ये

तमिळुनाडुराज्ये एषः उत्सवः नवरात्रोत्सवनाम्ना आचर्यते । प्रतिगृहं विविधाः लघुपाञ्चालिकाः रमणीयतया संस्थाप्यन्ते । ('बोम्मकोलु' इति तस्य तमिळुनाम) एताः पाञ्चालिकाः परम्पराप्राप्ताः भवन्ति प्रायः । आधुनिकाः अपि पाञ्चालिकाः स्थाप्यन्ते



क्वचित् । ग्रामदृश्यं, विवाहदृश्यं, सङ्गीतवाद्यानि इत्यादिषु कमपि विषयम् आधारीकृत्य पञ्चालिकानाम् आयोजनं भवति ।

अल्पवयस्कानां बालानां दृष्ट्या विजयदशमी महत्त्वपूर्णं दिनम् । एतस्मिन् एव दिने तेषां विद्याभ्यासस्य आरम्भं कारयन्ति मातापितरः । एतस्मिन् दिने यत् कार्यम् आरभ्यते तत् निर्विघ्नतया परिसमाप्यते इति जनानां विश्वासः ।

## नवरात्रोत्सवः गुजरातराज्ये

गुजरातराज्ये नवरात्रोत्सवः पूजार्थकः आनन्दहेतुकः च । तस्मिन् दिने महिलाः पारम्परिकवेषं चोलं गाग्रां च धृत्वा मृद्दीपं परितः नृत्यं कुर्वन्ति । एतस्य नृत्यस्य नाम 'गर्बा' इति । तालबद्धतया करतालं कुर्वत्यः ताः नृत्यन्ति । तरुणाः तरुण्यः च तस्मिन् दिने शुभ्रं 'चनिया'चोलं 'केदियास्'नामकं वस्त्रविशेषं च धरन्ति । एतत् उभयम् अपि पारम्परिकः वेषः ।

श्रीकृष्णः गोपिकाभिः सह सम्भूय प्राचीने काले यत् नृत्यं करोति स्म तत् '*रासलीला*'-नाम्ना निर्दिश्यते । रासस्य सन्ति अनेके प्रकाराः । 'दण्डीयः' इति तु तेषु अन्यतमः । तरुणाः नृत्यकाराः तालानुगुणं हस्तद्वयेन गृहीताभ्यां दण्डाभ्यां विविधैः प्रकारैः शब्दम् उत्पादयन्तः गायन्तः नृत्यन्ति यत् सः एव '*दण्डीयरासः*' नाम । एतादृशम् एव नृत्यं करतालास्फालनेन शब्दम् उत्पाद्य तदनुगुणं यदि क्रियते तर्हि तत् नृत्यम् उच्यते '*गर्बारासः*' इति ।

एतत् 'गर्बा'नृत्यं जानपदशैल्या क्रियते गुजराते । कृष्णस्य पौत्रस्य अनिरुद्धस्य पत्नी उषा एतस्य नृत्यप्रकारस्य प्रवर्तिका इति अत्रत्याः जनाः भावयन्ति ।








# निर्मीयन्ताम् भित्त्यलङ्कारसाधनम्



यदि वर्णमय्यः मालाः, रमणीयाः पताकाः, आकर्षकाणि भित्त्यलङ्कारसाधनानि च न स्युः तर्हि पर्वणः का वा शोभा भवेत् ? वर्णमयैः पत्रैः भित्त्यलङ्कारसाधनं कथं निर्मातव्यम् इति अत्र निरूपितम् अस्ति -

त्रिविधानि वर्णमयकागदानि स्वीकुर्वन्तु । अत्र तु रक्तपीतनीलवर्णाः चिताः सन्ति । मापनपट्टिका, अङ्कनी, कर्तरी, संश्लेषकं, सूची चापि एतदर्थम् आवश्यकानि ।

१. वर्णमयकागदानि कर्तयित्वा प्रतिकागदं सप्त पट्टिकाः प्राप्नुवन्तु । ततः तेषाम् अन्तद्वयम् अपि योजयित्वा दलाकारतां चित्रे यथा दर्शितं तथा कल्पयन्तु । नीलिवर्णीयः १५ X १ सें.मी.आकारकः, पीतवर्णीयः १२ X १ सें.मी.आकारकः, रक्तवर्णीयः १० X १ सें.मी.आकारकः च स्यात् ।

२. नीलवर्णीयानाम् अग्रभागं योजयित्वा चित्रे दर्शितेन क्रमेण वर्तुलाकारेण संयोज्य यत्र परस्परस्पर्शः भवति तत्र सीवनं कुर्वन्तु ।

३. रक्तपट्टिकायाः अग्रभागौ नीलदलयोः मध्ये योजयन्तः चित्रे दर्शितेन क्रमेण द्वितीयचक्रं रचयन्तु । एवम् एव पीतवर्णीयदलाकारं रक्तवर्णदलयोः मध्ये संश्लेषयन्तु ।

४. कस्मिंश्चित् दले तन्तुं योजयित्वा भित्तौ उत्तोलयन्तु । एतत् भवतः प्रकोष्ठस्य शोभां वर्धयतु ।

स्वप्रतिभाम् उपयुज्य विभिन्नसाधनानि, विभिन्नवर्णीयानि च उपयुज्य तादृशीः आकृतीः रचयन्तु, याश्च शोभावर्धिकाः स्युः ।

**नवरात्रोत्सवस्य शुभाशयाः**

# बुद्धिमान् यदुमणिः



नवदशे शतके ओडिस्साराज्ये यदुमणिः नाम कविः आसीत् । तस्य पिता मुकुन्दः । सः श्रेष्ठः शिल्पी । तेन कदाचित् कृष्णमूर्तिः निर्मिता । 'एतां राधानाथमूर्तिं कुत्र स्थापयाम ?' इति पृष्टवान् यदुमणिः । 'वयम् एव मन्दिरं निर्माम' इति उक्तवान् मुकुन्दः ।

मुकुन्दः स्वस्य समग्रां सम्पत्तिं मन्दिरनिर्माणार्थं व्ययीकृतवान् । यदा सः दिवं गतः तदा तस्य उत्तरक्रियां निर्वर्तयितुम् अपि गृहे वराटिकामात्रम् अपि धनं न आसीत् । यदुमणिः अचिन्तयत् - 'इदानीं राजा एकः एव साहाय्यं कर्तुं शक्नुयात् । किन्तु राज्ञः सम्पर्कः कथं वा साधयितुं शक्यः ?' इति ।





स च सायङ्कालसमयः । देवस्थानस्य अर्चकः पूजां समाप्य द्वारस्य पिधानं कुर्वन् आसीत् । तावता यदुमणिः स्मृतवान् यत् राजा एतेन मार्गेण अद्य निर्गच्छति इति । अतः सः झटिति मन्दिरं गत्वा द्वारं हस्तेन ताडयन् उच्चैः अवदत् - ''भ्रात ! यदुनाथ ! उत्तिष्ठतु तावत्'' इति ।

तावता राज्ञः शिबिका तत्र आगता । मन्दिरस्य पिहितं द्वारं ताडयन्तं पुरुषं कञ्चित् दृष्ट्वा राजा कुतूहली जातः । सः शिबिकावाहकम् आज्ञापितवान् यत् तत्र किं प्रवर्तते इति ज्ञात्वा आगच्छतु इति ।





राजा शिबिकायाम् एव उपविष्टः । शिबिकावाहकः यदुमणिसमीपं गतवान् । 'राजा माम् आह्वयति किम् ?' इति वदन् तं शिबिकावाहकम् अनुसृतवान् यदुमणिः ।



शिबिकावाहकः प्रत्यागत्य राजानम् अवदत् – "एषः कविः यदुमणिः । मुकुन्दस्य पुत्रः । मुकुन्दश्च राधानाथ-मूर्तेः निर्माता शिल्पी" इति । "तत्र भवान् किं कुर्वन् आसीत् ? भवान् उन्मत्तः तु न खलु ?" इति पृष्टवान् राजा ।



यदुमणिः विनयेन अवनम्य अवदत् – "महाराज ! राधानाथः मम अग्रजः । मम जन्मतः पूर्वं पिता तं निर्मितवान् । अत सः अग्रजः मम । पितुः उत्तरक्रियायाः निर्वर्तनं ज्येष्ठपुत्रस्य कार्यं खलु ? अतः तम् अहम् उत्थापयन् अस्मि । किन्तु सः जागरितः न भवति" इति ।



तदा राजा एकं नाणकग्रन्थिं तस्मै यच्छन् अवदत् – "भवतः अग्रजः राधानाथः इदानीम् उत्थातुं न अर्हति । अतः एतेन धनेन पितुः उत्तरक्रियां निर्वर्तयतु यथाविधि । सर्वं समाप्य मम आस्थानम् आगच्छतु । दुःखकाले अपि महतीं बुद्धिमत्तां प्रदर्शयतः भवतः कौशलेन अहं नितरां सन्तुष्टः अस्मि" इति ।

# वार्ताविशेषाः

## मीनेन कृतं सुदीर्घप्रयाणम् !

त्रयोदशसहस्त्र(१३०००)कि.मी.दूरं यावत् तरणं कृतं वर्षचतुष्टयाभ्यन्तरे । तदपि एकेन मीनेन !! सत्यम् एतत् । १९९६ तमे वर्षे एषा तरणयात्रा आरब्धा । बेरिल्याटेसा नौकां चालयन्ती एकं मीनं प्राप्य तस्य कण्ठे सङ्केतपट्टिकां बद्ध्वा आस्ट्रेलियास्थे 'ग्रेट्-ब्यारियर्रीक्'प्रदेशे समुद्रे परित्यक्तवती । स च मीनः गते मे-मासे मध्यामेरिकाप्रदेशे कोस्टारिकीये क्यूफास्नगरे केनचित् मत्स्यग्राहिणा प्राप्तः । सः तरूा मीनस्य कण्ठे स्थितां सङ्केतपट्टिकाम् अपनीय बेरिल्याटेसावर्यायै प्रेषितवान् अस्ति ।




## निषेधः सिंहादि-साहसप्रदर्शनस्य



भारते सर्कस्केन्द्रे सिंहः, व्याघ्रः, चित्रकः, वानरः इत्यादीनां साहस-प्रदर्शनं निषेधितम् अस्ति । केन्द्र-सर्वकारेण घोषितः एषः निषेधः सर्वोच्चन्यायालयेनापि अनुमतः अस्ति । आदौ खण्डपीठेन एतादृशः निर्णयः कृतः । किन्तु एतं निर्णयं विरुध्य केचन सर्कस्संस्थास्वामिनः सर्वोच्चन्यायालयं गतवन्तः । तेषां जीविनां प्रशिक्षणावसरे या हिंसा जायते तां मनसि निधाय सर्वोच्चन्यायालयेन खण्डपीठीयः निर्णयः पुरस्कृतः । चत्वारिंशद्वर्षाणि यावत् अनुवृत्तः एषः न्यायिकव्यवहारः एतस्मात् समाप्तिं गतः ।

# अतिदीर्घं ट्रेन्यानम्



भवन्तः एतस्य ट्रेन्यानस्य दैर्घ्यं कल्पनामात्रे द्रष्टुं शक्नुयुः । प्रत्यक्षं द्रष्टव्यं चेत् विमानयाने उपविश्य आकाशतः द्रष्टव्यं भवेत् । एतत् यानं पश्चिमास्ट्रेलियाप्रदेशे प्रयाणम् अकरोत् । एतत् ६८२ 'व्यागन्'युक्तम् आसीत् । एतस्य आकर्षणार्थम् अष्टौ यन्त्राणि योजितानि आसन् । एतस्य दैर्घ्यम् आसीत् ७.३५ कि.मी. । अतः एतत् 'गच्छति स्म' इति कथनम् अनुचितं स्यात् 'सर्पति स्म' इति कथनम् एव युक्तं स्यात् ।

# परमापायसूचकम् आह्वानं कृतं शुकेन

इंग्लेण्डदेशे अपायज्ञापिका सङ्ख्या भवति - '९९९' एकदा 'म्याञ्चेस्टर्'नगरीयेण आरक्षक-स्थानकेन एतादृशम् आह्वानं प्राप्तम् । तत्रत्यैः झटिति तत्र गतं, यतः तत् आगच्छति स्म । तत्र गमनानन्तरं तैः ज्ञातं यत् केनचित् आस्ट्रेलियन्शुकेन ध्वनिग्राहकं कथमपि तदीयस्थानात् च्यावयित्वा नवमसङ्ख्याकस्य नोदकस्य उपरि त्रिवारम् उत्प्लवनं कृतम् इति ।



# यद्दिने वृक्षे कुण्डलिकाः आसन्, तस्मिन् दिने...

अर्जुनः कश्चन प्रतिभाशाली तरुणः। सः काष्ठकार्ये, वस्त्रसीवने, अन्येषु बहुषु करकौशलकार्येषु च निपुणः आसीत्। किन्तु तस्य पत्नी रतिः तद्विरुद्धस्वभावा। सा जल्पनशीला। ग्रामे सर्वत्र सञ्चारं कृत्वा महिलाभिः सह जल्पनं क्रियते चेदेव तस्याः सन्तोषः। अर्जुनाय तस्याः स्वभावः, व्यवहारः वा न रोचते स्म। तथापि पत्नीविषयकानुरागेण सः किमपि न वदति स्म।

एकदा रतिः आलुकपाकं कर्तुम् इष्टवती। किन्तु गृहे आलुकानि न आसन्। तदा अर्जुनः उक्तवान् - ''अहं वाटिकातः आलुकानि आनेष्यामि'' इति। सः वाटिकां गत्वा आलुकसस्यानाम् उत्पाटनार्थं खननम् आरब्धवान्। तदा खननसमये खनित्रघट्टनेन 'ठन्' इति शब्दः श्रुतः। आश्चर्यम् अनुभवन् अर्जुनः खननम् अनुवर्तितवान्। तत्र तेन सुवर्णनाणकैः पूर्णम् एकं पात्रं प्राप्तम्।

'एतत् पात्रं कुतः आगतं स्यात् ?' इति क्षणं यावत् चिन्तितवान् सः। ततः तस्य मनसि विचारः आगतः - 'यत्र मया खननं कृतं तत्र भूमिः सुदृढा न आसीत्। अतः स्पष्टं यत् एषु दिनेषु कोऽपि एतत् पात्रम् अत्र स्थापितवान् इति। एतत् चौर्येण सम्पादितम् इति तु निश्चितम्। वराकस्य चोरस्य दौर्भाग्यम्, मम च सौभाग्यम्' इति।



धनपात्रं स्वीकृत्य प्रस्थितस्य तस्य मनसि अपरः विचारः आगतः - 'यदि मम पत्नी धनप्राप्तिवार्तां जानीयात् तर्हि सर्वान् वदेत् एव। तदा आरक्षकाः माम् एव चोरं मत्वा गृह्णीयुः अपि। आलुकवाटिकायाम् एतत् प्राप्तम् इत्यत्र को वा विश्वासं कुर्यात् ?' इति। अतः सः धनपात्रं तत्रैव भूमौ स्थापयित्वा उपविश्य चिन्तनम् अकरोत्।

अल्पे एव काले तस्य मनसि कश्चन

उपायः स्फुरितः । सः एकाम् उत्तमां योजनां कृत-वान् । ततः उत्थाय सः परितः दृष्टिं प्रसारितवान् । अनतिदूरे एकः महान् वटवृक्षः तेन दृष्टः । वृक्षशाखायां कोटरः अपि दृष्टः । तस्मिन् सुवर्णपात्रं गोपयित्वा – 'कोऽपि पात्रस्य स्थितिं ज्ञातुं न शक्नोति' इति दृढीकृत्य ततः सः प्रस्थितवान् । ततः ग्रामं गत्वा सः मन्दिरपार्श्वे स्थितं मधुरापणं गतवान् । आपणिकं गोविन्दम् उक्तवान् सः – ''गोविन्दवर्य ! किलोपरिमितं कुण्डलिका-खाद्यं ददातु'' इति । महता सन्तोषेण गोविन्दः



कुण्डलिकाः दत्तवान् ।

ततः अर्जुनः फलापणं गत्वा कदली-फलानि क्रीतवान् । ततः सः न गृहं गतवान्, अपि तु अरण्यस्य दिशि एव गतवान् । स्वस्य चिन्तनस्य अनुगुणं सर्वं कृत्वा गृहं प्रत्यागतवान् सः ।

गृहम् आगतं तं पृष्टवती रतिः – ''आलुकानि विनैव मम पाकः समाप्तः । एतावत्कालं कुत्र किं कृतवान् भवान् ?'' इति ।

''अरण्ये पक्वानि आम्रफलानि दृष्टानि मया । किं तानि आनेतुं गच्छाम ? भोजनकाले यदि आम्राणि अपि स्युः तर्हि वरं स्यात्'' इति उक्तवान् अर्जुनः ।

ततः तौ उभौ अपि अरण्यं प्रति प्रस्थितवन्तौ । वटवृक्षस्य समीपे स्थितस्य आम्रवृक्षस्य समीपं तां नीतवान् अर्जुनः । ''अहं कानिचन आम्रफलानि सङ्गृह्णामि'' इति उक्त्वा उत्साहेन गता रतिः क्षणानन्तरम् अवदत् – ''अहो ! अत्र आम्रवृक्षे कुण्डलिकाः उत्पन्नाः दृश्यन्ते !'' इति ।

''कथम् आम्रवृक्षेषु कुण्डलिकानाम् उत्पत्तिः ?'' इति आश्चर्यं प्रकटयन् पत्न्याः समीपम् आगतवान् अर्जुनः । वस्तुतः तु ताः तेनैव तत्र योजिताः आसन् । तथापि सः आश्चर्येण अवदत् – ''आम्रवृक्षे कुण्डलिकाः सन्ति इति तु महते आश्चर्याय'' इति ।



वटवृक्षस्य दिशि गतवान् ।

वटवृक्षसमीपं गत्वा सः अत्याश्चर्यं प्रकटयन् उच्चैः अवदत् - ''अहो, अत्रास्ति अपरा विचित्रघटना'' इति ।

''का सा आश्चर्यकरी घटना ?'' इति दूरात् एव पृष्टवती रतिः ।

''अत्र वटवृक्षस्य कोटरे अस्ति किञ्चन पात्रम्'' इति वदन् पात्रं दर्शितवान् अर्जुनः ।

''अहो, सुवर्णानि !'' इति वदन्ती आश्चर्यं प्रकटितवती रतिः । ततः तौ सुवर्णनाणकपात्रं गृहीत्वा गृहं गतवन्तौ ।

''एतद्विषये कोऽपि किमपि न वक्तव्यः सर्वथा । स्मरतु एतत्'' इति पत्नीं स्मारितवान् अर्जुनः । तथापि सः

ततः अर्जुनः पुनः अवदत् - ''भवती कानिचन करवीरपुष्पाणि आनयतु । तावता अन्यः आम्रवृक्षः दृश्यते वा इति अहं पश्यामि'' इति । ततः रतिः करवीरसस्यं प्रति गतवती । तत्र पुनरपि तस्याः एव घटनायाः पुनरावृत्तिः ।

''कदलीफलानि सन्ति करवीरवृक्षे !'' इति आश्चर्येण उक्तवती रतिः ।

अर्जुनः तु किमपि अजानन् इव पत्न्याः समीपं गतवान् । ''एतानि कदलीफलानि करवीरसस्ये आसन्'' इनि वदन्ती करतले स्थितानि कदलीफलानि दर्शितवती रतिः ।

''अहो, आश्चर्यमहो आश्चर्यम् ! आम्रवृक्षे कुण्डलिकाः ! करवीरसस्ये च कदली-फलानि ! सर्वथा विश्वासायोग्यानि एतानि'' इति वदन् आश्चर्यं च प्रकटयन् अर्जुनः

जानाति स्म एव यत् घण्टाभ्यन्तरे एषा वार्ता सर्वत्र प्रसृता भविष्यति एव इति ।

''अहं कामपि सर्वथा न वदामि'' इति प्रतिज्ञां कृतवती रतिः ।

किन्तु सा रहस्यं दीर्घकालं गोपयितुम् असमर्था जाता । अतः सा प्रियसखीं गीतां रहसि विषयम् उक्तवती । सा स्वस्य सखीम् उक्तवती । सा च स्वस्य अनुजम् । अनुजश्च प्रतिवेशिनम् । सः अन्यम् .... । एवं घण्टाभ्यन्तरे ग्रामप्रमुखेण, रक्षकभटप्रमुखेण च एषा वार्ता प्राप्ता ।

''तम् अर्जुनम् आनयन्तु तावत् । ह्यः रात्रौ शकटमितं सुवर्णं तस्य वाटिकायां प्राप्तम् अस्ति इति वार्ता श्रूयते । विचारयिष्यामः तम्'' इति भटम् आज्ञापितवान् प्रमुखः । भटः सैनिक-नमस्कारं समर्प्य ततः निर्गतवान् । एवं घटमितं

सुवर्णं शकटमिततां प्राप्तवत् आसीत् ।

रक्षकभटम् अनुसरन्तौ अर्जुनः रतिः च आरक्षकस्थानकम् आगतवन्तौ ।

''मया श्रुतं यत् भवतोः उद्याने शकटमितं सुवर्णं प्राप्तम् इति । किम् एतत् सत्यम् ?'' इति पृष्टवान् रक्षकभटप्रमुखः ।

''शकटमितं सुवर्णम् !! सर्वथा तावत् न प्राप्तम् । केवलं घटमितं सुवर्णं प्राप्तम्'' इति उक्तवती रतिः । अर्जुनः मौनेन स्थितः आसीत् ।

''घटमितं सुवर्णं प्राप्तम् ? कुत्र अस्ति तत् ? तत् कदा प्राप्तम् ?'' इति पृष्टवान् आरक्षकप्रमुकः ।

''अद्य प्रातः तत् प्राप्तम् । अद्य अन्याः अपि बह्व्यः आश्चर्यकर्यः घटनाः प्रवृत्ताः'' इति उक्तवती रतिः ।

''आश्चर्यकर्यः घटनाः !! ताः काः ?'' इति महता कुतूहलेन रतिं पृष्टवान् आरक्षकप्रमुखः ।

''अद्य अस्माभिः आम्रवृक्षे कुण्डलिकाः प्राप्ताः'' इति उक्तवती रतिः ।

ताम् आश्चर्येण पश्यन् पृष्टवान् आरक्षकप्रमुखः - ''कुण्डलिकाः प्राप्ताः आम्रवृक्षे ! सर्वथा अविश्वसनीयम् एतत्'' इति ।

''करवीरपुष्पसस्ये अस्माभिः कदलीफलानि अपि प्राप्तानि'' इति पुनः उक्तवती रतिः ।

'करवीरसस्ये कदलीफलानि प्राप्तानि इति वदन्ती एषा उन्मत्ता एव स्यात्' इति निर्णीतवान् आरक्षकप्रमुखः ।

''ततः अस्माभिः वटवृक्षकोटरे धनपात्रं प्राप्तम्'' इति उक्त्वा मौनेन स्थितवती रतिः ।

आरक्षकप्रमुखः तां करुणया पश्यन् - ''अस्तु तावत् । भवती इदानीं गृहं गच्छतु'' इति आदिश्य अर्जुनं पश्यन् - ''मित्र ! पत्नीविषये अधिकम् अवधानं भवतु'' इति सूचितवान् ।

अर्जुनः रतिः च गृहं गतवन्तौ । सुवर्णनाणकबलात् तौ धनिकौ जातौ । 'प्रवृत्तं सर्वं पृष्ट्वा अपि आरक्षकप्रमुखः किमर्थं किमपि न कृतवान् एव' इति तु रत्या कदापि न ज्ञातम् एव ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

पर्वपरम्परायाः आरम्भः सन्निहितः अस्ति । कानिचन पर्वाणि धार्मिकमहत्त्वम् अर्हन्ति, पुनः कानिचन कृषिसम्बद्धानि, अन्यानि कानिचन सामाजिकमहत्त्वोपेतानि । एतस्य मासस्य प्रश्नाः भारतीयपर्वाणि अधिकृत्य सन्ति । तेषाम् उत्तराणि ज्ञातुं प्रयतन्ताम् -

१. कः उत्सवः विष्णोः दशावतारसम्बद्धः अस्ति ?

२. रामः रावणं संहृत्य चतुर्दशवर्षात्मकं वनावासं समाप्य अयोध्यां प्रत्यागतवान् यत् तां घटनाम् अवलम्ब्य कश्चन उत्सवः आचर्यते । तस्य नाम किम् ? स च २००१ तमे वर्षे कदा आचर्यते ?

३. बालाः कस्य उत्सवस्य दिने विद्यारम्भं कुर्वन्ति ? बङ्गालीयाः च कस्मिन् दिने विद्याधिदेवतायाः पूजां कुर्वन्ति ?

४. कौ उत्सवौ भ्रातृभगिन्योः सम्बन्धं निकटतमं कुरुतः ?

५. पार्सीजनाः स्वस्य धर्मप्रवर्तकस्य जन्मदिनाचरणं कदा कुर्वन्ति ? तस्य नाम किम् ?

६. मुस्लिम्जनाः स्वस्य धर्मप्रवर्तकस्य जन्मदिनाचरणं कदा कुर्वन्ति ? तस्य नाम किम् ?

७. ईस्टर्पर्वणः सङ्केतितार्थः कः ?

८. बुद्धपूर्णिमा (वैशाखपूर्णिमा) त्रीन् अंशान् सङ्केतयति । ते च के ?

९. कस्मिन् पर्वदिने तमिळुनाडीयाः महिलाः तण्डुलं पक्त्वा पात्रं चुल्लेः उपरि एव परित्यजन्ति ?

१०. दक्षिणभारते मकरसङ्क्रमणदिने कस्मिन् देवालये आश्चर्यकरी घटना प्रवर्तते ? सा च घटना का ?

**'सप्टम्बर्' प्रश्नावल्याः उत्तराणि** *(उत्तराणि अग्रिमे मासे)*

१. नलन्दा ।

२. रवीन्द्रनाथ ठागोरः १९०१ तमे वर्षे ।

३. कलाक्षेत्रम् । रुक्मिणीदेवी अरुण्डेल्-वर्यया ।

४. १९८६ तमे वर्षे ।

५. शिमलानगरे ।

६. पण्डितः मदनमोहनमालवीयः ।

७. अलीगढमुस्लिंविश्वविद्यालयेन ।

८. मूलभूतशिक्षणं, 'नयी तालीम' इति वा ।

०९. मौलाना अब्दुल् कलाम् अझाद् ।

१०. १८५७ तमे वर्षे ।

११. १८३५ तमे वर्षे लार्ड् मेकालेवर्येण ।

१२. डा॰ माल्कम् आदिशेषय्यः, यश्च मद्रास्-विश्वविद्यालयस्य भूतपूर्वः कुलाधिपतिः आसीत् ।

१३. द्रोणाचार्यः ।

१४. कलामण्डलम्, चेरुतुरुत्तीरनगरे अस्ति ।

१५. तक्षशिलास्थः ।



# कृष्णभूपतिः

बहुपूर्वं मन्दाकिनीनद्याः तटे मलयद्वीप नामकः देशः आसीत्। गोपालभूपतिः तस्य देशस्य शासकः। कृष्णभूपतिः तस्य एकमात्रदत्तकपुत्रः। कृष्णभूपतिः यदा दशवर्षीयः आसीत् तदा एव तदीयः पिता दिवङ्गतः।

मलयद्वीपस्य उत्तराधिकारी कृष्णभूपतिः एव आसीत्। किन्तु भगवदपेक्षायाः समक्षं किमपि न चलति खलु? एकदा कृष्णभूपतिः अश्वारोहणावसरे अश्वात् पतितः। तस्य शिरसि महान् क्षतः अभवत्। वैद्याः बहु प्रयत्नं कृतवन्तः। तथापि कृष्णस्य मृत्युः अभवत्।

तदा राज्ञी सुनन्दा अत्यन्तं दुःखिता अभवत्। तथापि आत्मनि धैर्यं प्रपूर्य सा कस्यचित् सैनिकस्य पुत्रं दत्तकरूपेण स्वीकृतवती। तस्यापि 'कृष्णभूपतिः' इति नाम कृतम्। वयसा लघुः सः राजनीतेः सूक्ष्मांशान् न जानाति स्म।

शासनं सुचारुरूपेण चालयितुं कृष्णभूपतिः असमर्थः आसीत्। अतः माता सुनन्दादेवी चिन्ताग्रस्ता जाता। तदा चन्दनवर्मा तस्याः साहाय्यं कर्तुम् अग्रे आगतः।

चन्दनवर्मा सुनन्दादेव्याः ज्येष्ठसहोदरः। सः कुशद्वीपस्य राजा। आवुत्तस्य मरणवार्तां श्रुत्वा सः झटिति मलयद्वीपं प्राप्तवान्। भगिन्याः सान्त्वनं कृतवान्। सः मौनेन न अतिष्ठत्। तादृशदुःखितां भगिनीं त्यक्त्वा गन्तुं न इष्टवान् सः। मम प्रतिगमनेन मलयद्वीपस्य स्थितिः कीदृशी स्यात् इति सः सम्यक् जानाति स्म। अतः सः स्वस्य कर्तव्यं किम् इति निर्धारितवान्। कुशद्वीपं प्रतिगत्य राजपरिवारस्य विश्वासपात्रं मूल्यवन्नामकं राजप्रतिनिधिरूपेण नियोज्य पत्न्या

'चन्दमामा'



पुत्र्या च सह मलयद्वीप प्रति आगतवान्।

शुभे मुहूर्ते चन्दनवर्मा भागिनेयस्य कृष्णभूपतेः राज्याभिषेकं कारितवान्। सः स्वयं कृष्णभूपतेः गुरुः भूत्वा राजनीतिं सम्यक् बोधितवान्।

युद्धकलासु निपुणेभ्यः अस्त्राणां शस्त्राणां च विषये अभ्यासं कारितवान्। कृष्णभूपतिः अत्यन्तं मेधावी आसीत्। अतः सः पञ्चषवर्षाभ्यन्तरे सर्वासु विद्यासु पारङ्गतः अभवत्।

ललितकलासु तस्य महती अभिरुचिः आसीत्। सः कविताः अपि रचयति स्म।

भागिनेयः शासननिर्वहणे समर्थः जातः इति यदा चन्दनवर्मा विश्वासं प्राप्तवान् तदा सः समग्रं दायित्वं भागिनेये निक्षिप्य स्वदेशं प्रति प्रस्थितवान्।

स्वदेशं प्राप्य चन्दनवर्मणा अनिरीक्षिताः घटनाः सम्मुखीकरणीयाः अभवन्। तस्य अनुपस्थितौ मूल्यवान् सुखभोगेषु निरतः आसीत्। राज्यव्यवस्था छिन्नविच्छिन्ना जाता आसीत्। तस्मिन् अधिकारप्राप्तेः आशा जागरिता आसीत्। अतः सः चन्दनवर्मणः आगमनसमनन्तरमेव तस्य बन्धनं कारितवान्। विश्वासघातस्य एतं प्रसङ्गं सोढुम् अशक्तः चन्दनवर्मा कारागारे एव मृतः अभवत्। कस्याचित् विश्वासपात्रस्य सेवकस्य साहाय्येन चन्दनवर्मणः पत्नी पुत्र्या सह मलयद्वीपं प्राप्तवती।

अग्रजस्य कुटुम्बस्य दयनीयाम् अवस्थां दृष्ट्वा सुनन्दादेवी दुःखिता अभवत्। 'अग्रजस्य साहाय्येन एव मम पुत्रः शासने समर्थः अभवत्। चन्दनवर्मणः साहाय्यं यदि न अभविष्यत् तर्हि मलयद्वीपस्य स्थितिः शोचनीया स्यात्' इति चिन्तितवती सुनन्दा अग्रजस्य पत्न्याः पुत्र्याः च स्वागतं कृत्वा तयोः रक्षणदायित्वं स्वीकृतवती।

सुनन्दादेवी एकदा पुत्रम् अन्तःपरं प्रति आहूय अवदत् - ''कृष्ण ! अहम् अद्यावधि कमपि किमपि न याचितवती। सत्यं वक्तव्यं चेत् मम कापि इच्छा नास्ति। किन्तु अद्य अहं किमपि याचामि किम्?'' इति।

तदा कृष्णभूपतिः मन्दहासपूर्वकम् अवदत् - ''भवत्याः मनसि मम विषये यदि सन्देहः स्यात् तर्हि भवती माम् अत्र न आह्वास्यत्। भवती निःसङ्कोचम् अपेक्षां प्रकटयतु'' इति।

तदा सुनन्दादेवी अवदत्-''मम कथनात् पूर्वमेव भवान् मन्दहासं प्रकटितवान्। एतेन ज्ञायते यत् अहं किम् अपेक्षे इति भवान् पूर्वमेव ज्ञातवान् अस्ति इति'' इति।

''भवत्याः अपेक्षा का इति अहं कथं ज्ञातुं शक्नुयाम्? भवती निस्सङ्कोचम् अपेक्षां प्रकटयतु तावत्'' इति उक्तं कृष्णभूपतिना।

तदा सुनन्दादेवी अश्रूणि मार्जयन्ती-''तर्हि शृणोतु ! मम प्रथमा अभियाचना अस्ति यत् भवता मूल्यावान् मारणीयः इति। यतः सः भवतः

मातुलस्य विषये विश्वासघातं कृतवान्। तस्य कृतघ्नतायाः कारणतः भवतः मातुलः मरणं प्राप्तवान् अस्ति। यावच्छीघ्रं भवता सः हन्तव्यः। अस्मिन् प्रयत्ने भवता वीरगतिः प्राप्ता चेत् अपि चिन्ता नास्ति। मम आनन्दः एव भविष्यति। द्वितीया अभियाचना तु अस्ति यत् मम भ्रातृव्या ज्योत्स्ना भवतः पत्नी भवेत् इति। भवतः मातुलस्य अपेक्षा अपि तथैव आसीत्'' इति उक्तवती।

तदा कृष्णभूपतिः अत्यन्तमृदुस्वरेण अवदत् - ''अम्ब ! एतावल्लघुविषयम् उद्दिश्य भवती दुःखम् अनुभवति किम्? भवत्याः इच्छानुसारं ज्योत्स्ना एतस्य देशस्य राज्ञी भविष्यति। मूल्यवतः मारणं तु चिन्तायाः विषयः एव न। तस्य मारणं तु अत्यन्तं सरलं कार्यम्। अस्मिन् विषये अहं सेनापतिना, मन्त्रिणा च सह मन्त्रणं कृतवान् अस्मि। न केवलं कुशद्वीपम्, अपि तु मध्ये विद्यमानौ अमरद्वीपं कल्याणद्वीपं चापि स्वाधीनं करिष्यामः। त्रिषु अपि स्थलेषु अस्माकं विजयध्वजस्य स्थापना भविष्यति। एवं हि श्रूयते यत् त्रयाणाम् अपि द्वीपानां राजानः विलासजीवने मग्नाः भूत्वा आनन्दम् अनुभवन्तः सन्ति इति। जनकल्याणविषये किञ्चिदपि चिन्तयन्तः न सन्ति ते। जनाः अपि स्वार्थपराणां तेषां राज्ञां विषये विरोधं प्रकटयन्तः सन्ति। प्रायशः कृष्णपक्षस्य पञ्चम्याम् एव वयं तेषाम् उपरि आक्रमणं करिष्यामः'' इति।

पुत्रस्य वचनेन राज्ञी अत्यन्तं सन्तुष्टा अभवत्। सा आशीर्वादपूर्वकं - ''पुत्र ! विजयी भव। विजयी भूत्वा प्रत्यागच्छतु'' इति उक्तवती। कृष्णभूपतेः कथानानुसारमेव कृष्णपक्षस्य पञ्चम्यां सूर्योदयात् पूर्वमेव मलयद्वीपस्य असंख्याका सेना विजययात्रार्थं प्रस्थिता।

मलयद्वीपस्य सुप्रशिक्षितानां सैनिकानां



कारणतः अमरद्वीपस्य कल्याणद्वीपस्य च सेनाभ्यां पराजयः अङ्गीकरणीयः अभवत्। तयोः द्वीपयोः राजानौ पराजयम् अङ्गीकृतवन्तौ। तौ कृष्णभूपतिं शरणं गतवन्तौ। विजयोत्साहेन पूर्णा सेना इदानीं कुशद्वीपं प्रति प्रस्थितवती।

आदिनं सैनिकाः यात्रां कुर्वन्तः आसन्। रात्रौ ते एकं लघु अरण्यं प्राप्तवन्तः। राज्ञः सूचनानुसारम् अरण्यस्य अञ्चले सेनया शिबिराणि स्थापितानि। श्रान्तः कृष्णभूपतिः शिबिरे शयानः आसीत्। घण्टाभ्यन्तरे बहिः कश्चन कोलाहलः श्रुतः कृष्णभूपतिना। अनुक्षणं सः उत्थाय रक्षकं पृष्टवान् - ''कः कोलाहलः एषः ?'' इति।

बहिः स्थिताः रक्षकाः अनुक्षणम् अन्तः आगत्य - ''प्रभो ! कश्चन बालकः आगतवान् अस्ति। तस्य मुखे इतोऽपि श्मश्रूणि अपि न उत्पन्नानि। तथापि सः सैन्यं प्रवेष्टुम् इच्छति। अस्माकं सेनाधिपतेः सन्देहः अस्ति यत् एषः शत्रूणां गुप्तचरः स्यात् इति। अतः तं मध्ये एव



अवरुद्धवन्तः स्मः" इति उक्तवन्तः।

कृष्णभूपतिः शिबिरात् बहिः आगत्य दृष्टवान्। सैनिकानां पुरतः स्थितः बालकः लघुवयस्कः आसीत्। सैनिकानां हस्ते विद्यमानानां पञ्जिकानां प्रकाशे तस्य बालकस्य मुखे विशिष्टा कान्तिः, विशिष्टम् आकर्षणं च दृष्टम्। प्रायशः सैनिकाः तं बालकं पीडितवन्तः आसन् इति भाति। अतः तस्य विशालयोः नेत्रयोः तारके सरोवरे स्थितौ मत्स्यौ इव इतस्ततः सञ्चरतः स्म।

निर्भयेन राजानं पश्यन् आसीत् सः बालकः। तस्य मुखे दृढता, धैर्यम्, आग्रहः च स्पष्टरूपेण दृश्यन्ते स्म।

कृष्णभूपतिः तं बालकं नखशिखान्तं दृष्टवान्। 'तम् अन्तः प्रेषयतु' इति भटान् सूचितवान् च।

अनुक्षणम् अन्तः प्रविश्य सः भूपतिं नमस्कृत्य अवदत् - "भवतः दर्शनं एतावच्छीघ्रं भवेत् इति अहं न निरीक्षितवान् आसम्। अहं कृतज्ञः अस्मि प्रभो !" इति।

तस्य बालकस्य कोमलकण्ठस्य माधुर्यविषये चिन्तयन् भूपतिः अपृच्छत् - "कः भवान् ? कुतः आगतः ? किमर्थम् अस्माकं सैन्यं प्रवेष्टुम् इच्छति ?" इति।

तदा सः बालकः - "प्रभो, मम नाम कलापूर्णः इति। मम देशः कोऽपि स्यान्नाम। इदानीम् अहम् अनाथः अस्मि। मदीयः कोऽपि न अवशिष्टः इदानीम्। भवान् अधर्मं विरुध्य विजययात्रां कुर्वन् अस्ति। अहम् अपि तत्र भागम् ऊढ्वा मम कर्तव्यस्य पालनं कर्तुम् इच्छामि। मां भवान् रामायणस्य चिक्रोडं भावयतु, यश्च सेतुबन्धने रामस्य साहाय्यं कृतवान्" इति सविनयम् उक्तवान्।

कृष्णभूपतिः अवदत् - "तर्हि मया भवति विश्वस्य भवान् सैन्ये प्रवेशनीयः। एवं ननु भवतः आशयः ? एवं तर्हि युद्धविद्यायां भवतः सामर्थ्यं किम् इति किम् अहं ज्ञातुं शक्नोमि ?" इति।

तदा कलापूर्णः निर्भयेन अवदत् - "अवश्यम्। भवतः सैनिकेषु यदि कश्चित् आगच्छति तर्हि अहं मम दक्षतां प्रत्यक्षरूपेण दर्शयिष्यामि" इति अवदत्।

भूपतिः करताडनपूर्वकं किञ्चित् सैनिकम् आहूतवान्। अनुक्षणम् एकः सैनिकः अन्तः आगतवान्। कलापूर्णस्य कथनानुसारं सः सैनिकः शिबिरस्य वस्त्रपटस्य समीपे स्थितवान्। कलापूर्णः स्वस्य वस्त्रात् काष्ठमयं एकं लघु करण्डकं निष्कास्य ततः लघ्वाकारिकाः सूचीः निष्कासितवान्। ताः सूचीः एकैकशः सैनिकस्य शिरसः समीपे अक्षिपत् सः।

पञ्चविंशतिसूचीः यदा सः क्षिप्तवान् तदा तस्य वस्त्रपटस्य उपरि सूचीभिः अर्धवलयाकारकः कश्चन आकारः निर्मितः अभवत्। कलापूर्णस्य सूचनानन्तरं भयेन कम्पमानः सैनिकः ततः बहिः आगतवान्। अत्यन्तं चातुर्येण क्षिप्ताः सूचीः

भूपतिः अवधानपूर्वकं पश्यन् आसीत्। 'सैनिकस्य स्पर्शः यथा न स्यात् तथा सैनिकं परितः चातुर्यपूर्वकं सूचीः क्षेप्तुं कथम् एषः बालः शक्तः अभवत् ?' इति आश्चर्यं प्राप्तवान् सः। बालकस्य एकाग्रचित्ततां दृष्ट्वा सः नितरां प्रभावितः अभवत्।

कृष्णभूपतिः सहजतया करताडनपूर्वकम् अवदत् - "कलापूर्णम् अद्भुतं च एतत्। भवान् तु अद्भुतं साधितवान्। चमत्कारं कृतवान्" इति।

तदा कलापूर्णः सविनयं - "प्रभो, एताः तु सामान्याः सूच्यः। अपायकर्यः विषपूर्णाः सूच्यः अपि मम समीपे सन्ति" इति अवदत्।

किमपि कथनं विना भूपतिः कलापूर्णस्य हस्तं गृहीतवान्। स्वस्य पार्श्वे उपवेशयितुम् इष्टवान् च। किन्तु कलापूर्णः - "मास्तु प्रभो ! अहम् अत्रैव उपविशामि" इति वदन् स्वहस्तं राज्ञः हस्तात् मोचितवान्।



"सैन्यं प्रवेष्टव्यम् इत्येषः भवतः निर्णयः दृढः किम् ?" इति अपृच्छत् भूपतिः।

अनुक्षणं कलापूर्णः दृढस्वरेण अवदत् - "प्रभो! तत्र शङ्का नास्ति एव। विजयः वीरस्वर्गः वा एव मम लक्ष्यम्" इति।

कृष्णभूपतिः अग्रे किमपि न अवदत्। स्वस्य शिबिरस्य समीपे एव कलापूर्णस्य वसतिं कारितवान् सः। प्रातः सेनाधिपतिम् उद्दिश्य - "कलापूर्णः अश्वम् आरुह्य युद्धभूमौ मया सह स्थास्यति" इति अवदत्।

केषाञ्चित् दिनानाम् अनन्तरं युद्धं समाप्तम्। कृतघ्नं विश्वासघातकं च मूल्यवन्तं कृष्णभूपतिः युद्धभूमौ एव मारितवान्। कुशद्वीपस्य दुर्गे मलयद्वीपस्य ध्वजः उड्डायितः। कृष्णभूपतिः पराक्रमिसैन्यस्य प्रशंसां कुर्वन् कलापूर्णस्य अपि प्रशंसां बहुधा कृतवान्। कलापूर्णः तु साक्षात् अभिमन्युः इव एव शत्रुसैन्यं उध्वस्तं कृतवान् आसीत्।

युद्धे विजयस्य अनन्तरं कुशद्वीपे सप्ताहं यावत् विजयोत्सवः आचरितः। एकदा रात्रौ भूपतिः कलापूर्णम् आहूय अपृच्छत् - "कलापूर्ण! भवतः आशा आकांक्षा च पूर्णा अभवत् खलु? इदानीं वा वदतु - भवान् कः? कृपया विस्तरेण वदतु" इति।

कलापूर्णः क्षणं यावत् मौनेन स्थित्वा - "प्रभो! मम अपरा काचित् लघुः इच्छा अस्ति। भवान् यदि कृपां करिष्यति..." इति वदन् सम्भाषणं स्थगितवान्।

तदा भूपतिः पृष्टवान् - "सङ्कोचः किमर्थम्? वदतु, का सा इच्छा भवतः ?" इति।

तदा कलापूर्णः - "प्रभो ! अहम् अनाथः अस्मि। जीवनार्थं मया परिश्रमः करणीयः एव। भवता सह माम् अपि यदि मलयद्वीपं नेष्यति तर्हि आजन्म भवतः सेवां कुर्वन् स्थास्यामि"

इति स्वस्य इच्छां प्रकटितवान् विनयेन।

तदा कृष्णभूपतिः हसन् - "एतावती एव वा भवतः इच्छा ? अल्पायाः अस्याः पूरणे कः क्लेषः मम ? किन्तु ततः पूर्वं भवता तत् गीतं गातव्यं, यच्च भवान् उद्याने कस्यचित् वृक्षस्य अधः स्थित्वा गायन् आसीत्" इति अवदत्।

भूपतेः वचनैः कलापूर्णः अत्यन्तम् आश्चर्यचकितः सन् - "प्रभो ! भवान् तत्र कदा आगतवान् ?" इति पृष्टवान्।

तदा राजा हसन् अवदत् - "यदा आकाशे चन्द्रिका प्रसृता आसीत् तदा पूर्णचन्द्रम् अवलोकमानेन भवता उक्तम् आसीत् - 'हे चन्द्रिके, कृष्णपक्षस्य कृष्णमेघेभ्यः प्रसृतस्य अन्धकारस्य कारणतः एव भवत्या धवलताख्यातिः प्राप्ता अस्ति। जगति अनुत्तमता यदि न स्यात् तर्हि उत्तमतायाः मूल्यमेव न अभविष्यत्। अतः हे चन्द्रिके ! भवत्याः श्रेष्ठतायाः कारणं भवती एव स्वयम् इति आनन्दिता मा भवतु। पूर्णं श्रेयः तस्य कृष्णवर्णस्य भवति' इति। एवं भवान् यदा मधुरस्वरेण गीतगाने मग्नः आसीत् तदा पार्श्वे विद्यमानस्य आम्रवृक्षस्य पृष्ठतः निलीय पश्यन् आसम् अहम्" इति।

कलापूर्णः मौनम् आश्रितवान्। शिरः अवनमय्य प्रतिमावत् स्थितवान् सः। कृष्णभूपतिः कलापूर्णस्य समीपम् आगत्य - "कलापूर्ण ! भवतः मुखारविन्दस्य निर्मलतया, अङ्गुलीनां कोमलतया च अहं पूर्वमेव सन्देहं प्राप्तवान् आसम्। इदानीं वा भवान् स्वस्य विषये विवरणम् उक्त्वा मम सन्देहान् परिहरतु" इति उक्तवान्।

कलापूर्णः अनुक्षणम् उत्तरं न उक्तवान्। शिरः अवनमय्य एव स्वस्य शिरः परितः विद्यमानं वस्त्रं निष्कासितवान्। अनुक्षणं कृष्णवर्णाः तदीयाः दीर्घाः केशाः प्रसृताः अभवन्। सा अनुक्षणं कृष्णभूपतेः पादौ प्रणम्य अवदत् - "स्वार्थप्रेरिता अहम् असत्यम् उक्तवती। सत्यांशं गोपितवती। क्षाम्यतु माम्। अहं कलापूर्णः न, अपि तु कलाकौमुदी अस्मि" इति।

भूपतिः ताम् उत्थापयन् - "तद्दिने एव अहं चिन्तितवान् यत् भवती काचित् क्षत्रियकन्या इति। उपविश्य वदतु यत् भवती किमर्थम् एतम् अवतारं गृहीतवती इति" इति। अनन्तरं सः तां कस्मिंश्चित् आसन्दे उपवेशितवान्।

राज्ञः आदरपूर्वकेण व्यवहारेण कलाकौमुद्याः नेत्राभ्याम् आनन्दाश्रूणि निस्सृतानि। किञ्चित्कालं सा किमपि वक्तुम् अशक्ता। अनन्तरं कथञ्चित् आत्मानं निगृह्णती सा एवम् अवदत्।

- *(अनुवर्तते)*






# देवीभागवतम्

नैमिषारण्ये निवसन्तः मुनयः व्यासमहर्षिद्वारा अनेकाः कथाः श्रुतवन्तः आसन् । कदाचित् सूतमुनेः, शौनकमुनेः च सम्मुखे व्यासेन देवीभागवतनामकस्य पुराणस्य उल्लेखः कृतः आसीत् । एकदा शौनकमुनिः ताम् एव घटनां सूतमुनिं स्मारयन् 'तत् भागवतं श्रावयतु' इति अनुरोधं कृतवान् । तदा सूतमुनिना भागवतकथा श्राविता ।

आरम्भे सूतमुनिः आदिशक्त्याः विषये एवं कथितवान् – ''देवी नाम काचित् महती शक्तिः । सा एव विद्या । समस्तः लोकः तस्याः आश्रये अस्ति । सृष्टि-स्थिति-लयानां कारणभूता अस्ति सा । तस्याः कथाः एव 'देवीभागवत 'नाम्ना प्रसिद्धाः सन्ति'' इति ।

सूतमुनेः मुखात् देव्याः कथाः श्रोतुम् अनेके मुनयः इच्छन्ति स्म । तेषां परतया शौनकमुनिः सूतमुनिम् अपृच्छत् – '' एकदा ब्रह्मा अस्मभ्यम् एकं चक्रं दत्तवान् आसीत् । 'एतस्य चक्रस्य नेमिः यत्र भग्ना भवति तत् स्थलम् अत्यन्तं पवित्रम् अस्ति । तत्र कलेः प्रवेशः न भवति' इति उक्तवान् आसीत् सः । तस्य चक्रस्य नेमिः अस्मिन् स्थले एव भग्ना । अतः एतस्य प्रदेशस्य नाम 'नैमिषम्' इति प्रसिद्धम् । वयम् अत्र एव वसामः । कृतयुगस्य आरम्भपर्यन्तम् अत्र एव स्थित्वा वयं कलेः भयात् मुक्ताः भवितुम् इच्छामः । अत्र पुण्यगोष्ठीः विहाय अन्यत् कार्यं नास्ति अस्माकम् । अतः भवान् पुण्यप्रदायकं देवीभागवतं श्रावयतु कृपया'' इति ।

अनन्तरं सूतमुनिः एवम् अवदत् –

''महामुनिः व्यासः मां भागवतं श्रावितवान् । अहमपि तद्वत् एव भागवतं भवद्भ्यः श्रावयामि । इदानीम् अष्टाविंशतितमं द्वापरयुगं प्रचलति । प्रत्येकद्वापरयुगे एकस्य व्यासस्य जन्म अभवत् । वेदानां विभागं, पुराणानां रचनां च यः कृतवान् सः सत्यवतीसूनुः व्यासः मम गुरुः अस्ति । एकदा मम गुरुः स्वपुत्राय शुकाय देवीभागवतं श्रावयन् आसीत् । तदा

१. सूतशौनकमुनिगणेन श्रुतः हयग्रीवावतारः



अहम् अत्यन्तभक्त्या श्रद्धया च तां कथां हृद्गतां कृतवान् । ये एतत् भागवतं शृण्वन्ति ते कष्टात् विमुक्तिं प्राप्नुवन्ति'' इति ।

तदा मुनयः पृष्टवन्तः – ''शुकमुनिः कथं व्यासमहर्षेः पुत्रः जातः ? तस्य जन्म अरण्ये अभवत् इति श्रूयते खलु'' इति ।

तदा सूतमुनिः शुकस्य जन्मवृत्तान्तं श्रावितवान् – ''एकदा सरस्वतीनद्याः तटे तपस्यां कुर्वन् व्यासमहर्षिः एकं दृश्यं दृष्टवान् । केचन पक्षिणः पतिपत्नीरूपेण वसन्तः शावकैः सह सुखेन जीवन्ति स्म । शावकानां मुखे आहारं स्थापयन्तः ते परमानन्दम् अनुभवन्ति स्म । एतत् दृष्ट्वा व्यासः चिन्तितवान् – 'ममापि यदि सन्ततिः भवेत् तर्हि समीचीनं स्यात् । विवाहानन्तरं पत्न्या सह सुखेन जीवनं कर्तुं शक्नुयाम् । पुत्राः भवेयुः । ते अस्माकं वृद्धावस्थायां सेवां करिष्यन्ति । अस्माकं मरणानन्तरं चितायाम् अग्निस्पर्शं कृत्वा अस्मान् उत्तमलोकं प्रापयितुं पिण्डदानादिकं करिष्यन्ति । अतः मानवानां पुत्रसुखात् अपि श्रेष्ठं सुखम् अन्यत् किमपि नास्ति' इति । एवं विचिन्त्य व्यासमुनिः पुत्रप्राप्तेः इच्छया तपः आचरितुं काञ्चनाद्रिं गतवान् । कस्य देवस्य आराधना करणीया इति तत्र चिन्तनम् आरब्धम् । तदा तत्र नारदमहर्षिः आगतवान् । तं नमस्कृत्य व्यासः अवदत् – ''भगवन् ! भवान् उचिते समये उपस्थितः । मम इच्छां पूरयितुम् एव भवान् अत्र आगतः'' इति ।

तदा नारदः अवदत् – ''भवान् सर्वज्ञः । भवते अन्यस्य साहाय्यं न अपेक्षितम् एव । तथापि भवतः कापि इच्छा अस्ति चेत् सूचयतु'' इति ।

तदा व्यासः – ''पुत्रविहीनः उत्तमगतिं न प्राप्नोति इति श्रुतम् अस्ति मया । महर्षे ! कस्य देवस्य आराधनेन मम पुत्रप्राप्तिः भविष्यति इति सूचयतु'' इति अवदत् ।

तदा नारदः उक्तवान् – ''एकदा मम पितुः ब्रह्मणः मनसि अपि एषः सन्देहः उत्पन्नः आसीत् । सः विष्णुलोकं गत्वा उक्तवान् आसीत् – 'अहं भवन्तम् एव सर्वोत्तमं भावयामि । भवतः महत्तरः कोऽपि अस्ति चेत् वदतु' इति । विष्णुः उक्तवान् आसीत् – 'जनाः भवन्तं सृष्टिकर्तारं, मां स्थितिकारकं, शिवं लयकारकं च भावयन्ति । किन्तु एवं चिन्तनं न युक्तम् । वयं यदि सृष्टिस्थितिलयकारकाः तर्हि तत्र कारणं – रजोगुणेन भवतः, सत्त्वगुणेन मम, तमोगुणेन शिवस्य च क्रियमाणं साहाय्यम् । यदि तत् न स्यात् तर्हि

अस्माकं मूल्यमेव न अभविष्यत् । शेषतल्पे अहं शयनं करोमि, अहङ्कारिणां वधं करोमि । एतत् सर्वं तस्याः कृपया एव कर्तुं शक्यं खलु ? बहुपूर्वं कदाचित् मधुकैटभ-नामकाभ्यां राक्षसाभ्यां सह अहं दशसहस्त्रं वर्षाणि युद्धं कृतवान् । अन्ते आदिशक्त्याः साहाय्येन एव विजयः प्राप्तः । अहं कदापि स्वतन्त्रः न । एकदा धनुषः रज्ज्वा मम शिरः कर्तितम् अभवत् । तदा भवान् एव देवशिल्पिद्वारा हयस्य शिरः योजितवान् आसीत् खलु । तदा अहं हयग्रीवः अभवम् । अतः अहं शक्त्यधीनः । समस्तलोके शक्तितः अपि श्रेष्ठा कापि नास्ति'' इति ।

एवम् उक्त्वा नारदः व्यासम् अवदत् - ''यदि भवान् आदिशक्त्याः उपासनां करोति तर्हि भवतः इच्छा पूर्णा भविष्यति'' इति ।

अतः व्यासमहर्षिः लोकमातरम् उद्दिश्य तपः आरब्धवान् ।''

अनन्तरं मुनयः सूतमुनिं पृष्टवन्तः - ''विष्णोः शिरः कथं कर्तितम् अभवत् ? तस्य मुण्डेन अश्वस्य शिरः कथं योजितम् ? तां घटनां विस्तरेण श्रावयतु कृपया'' इति ।

## हयग्रीवावतारः

प्राचीने काले विष्णुः राक्षसैः सह दश-सहस्त्रं वर्षाणि यावत् युद्धं कृतवान् । अन्ते श्रान्तः सन् सः धनुषः ज्यायाः उपरि शिरः स्थापयित्वा निद्रां कर्तुम् उद्युक्तः अभवत् । तदवसरे देवाः यज्ञं कर्तुं सङ्कल्पं कृतवन्तः आसन् । अतः ते विष्णुम् अन्विष्यन्तः तत्र आगतवन्तः । विष्णुः सुप्तः आसीत् इत्यतः किं करणीयम् इति न ज्ञातवन्तः ते । तदा



शिवः ब्रह्माणम् अवदत् - ''भवान् एकं कीटं सृष्ट्वा तद्द्वारा धनुषः ज्यां त्रोटयतु । ज्या यदा त्रुटिता भवति तदा धनुषः दण्डभागः उत्थितः भवति । तदा विष्णुः जागरितः भवेत् । ततः यज्ञः सम्पत्स्यते'' इति ।

तदा ब्रह्मा कीटं सृष्ट्वा - 'धनुषः ज्यां त्रोटयतु' इति तम् आदिष्टवान् ।

तदा कीटः अवदत् - ''महात्मन् ! कथम् अहम् एतत् कार्यं करोमि ? मया महत् पापम् आचरितम् इव भवति खलु । मातापुत्रयोः, पतिपत्न्योः च मध्ये विरहोत्पादनं, निद्राभञ्जनं च ब्रह्महत्यासमं खलु'' इति ।

तदा ब्रह्मा कीटं समाश्वासयन् - ''भवान् चिन्तां न करोतु । यज्ञे अग्नये आहुतिरूपेण ये न दीयन्ते तादृशान् पदार्थान् अहं भवते ददामि'' इति ।

तदा कीटः प्रसन्नः भूत्वा ज्यायाः कर्तनं



कृतवान् । तदा महान् शब्दः श्रुतः । भूमिः कम्पिता अभवत् । ज्या यदा छिन्ना तदा विष्णोः शिरः कर्तितं सत् उपरि गतम् । तत् दृष्ट्वा देवाः भीताः । किं करणीयम् इति तैः न ज्ञातम् । ते दुःखेन विलापम् आरब्धवन्तः – 'भगवन्, भवान् तु सर्वेश्वरः, समस्तलोकानां पालकः च । कथं भवतः एषा स्थितिः जाता ? कोऽपि राक्षसः यत् कर्तुं न शक्तः तत् कथं शक्यं जातम् ?'' इति ।

देवगुरुः बृहस्पतिः तान् समाश्वासयन् – ''भवन्तः रुदन्तः यदि तिष्ठन्ति तर्हि किं प्रयोजनम्? जातं तु जातम् । एतस्य परिहारं चिन्तयाम'' इति अवदत् ।

तदा इन्द्रः अवदत् – ''सर्वेषु देवेषु पश्यत्सु एव भगवतः विष्णोः शिरच्छेदः जातः । एवं स्थिते अस्माकं प्रयत्नैः किम् ?'' इति ।

तदा ब्रह्मा अपि देवान् समाश्वासयन् – ''सर्वकार्यनिमित्तम् अपि जगदीश्वर्याः अनुग्रहः आवश्यकः । सा एव सृष्टिस्थितिलयकारिणी अस्ति । अतः भवन्तः सर्वे आदिशक्त्याः प्रार्थनां कुर्वन्तु'' इति उक्तवान् ।

सर्वे देवाः आदिशक्त्याः प्रार्थनां कृतवन्तः । तान् अनुग्रहीतुं सा तेषां पुरतः प्रत्यक्षा अभवत् । देव्याः दर्शनं प्राप्य देवाः तां – ''मातः ! भगवतः विष्णोः किमर्थम् एषा परिस्थितिः अभवत् ? तस्य शिरसः का गतिः अभवत् ?'' इति पृष्टवन्तः ।

तदा देवी – ''कारणं विना जगति किमपि न सम्भवति । एकदा शयनागारे विष्णुः लक्ष्मीं दृष्ट्वा हसितवान् । तदा लक्ष्मीः भीता सती – 'किमर्थं विष्णुः मम मुखं दृष्ट्वा हसति? किं मम मुखं तावत् कुरूपम् अस्ति ? अथवा मत्तः रूपवतीं काञ्चित् दृष्ट्वा मोहितः स्यात् वा सः ?' इति विचिन्त्य शापं दत्तवती – 'भवतः शिरः कर्तितः भूत्वा समुद्रे पततु' इति । तस्य शापस्य कारणतः एव विष्णोः स्थितिः एवम् अभवत् । तस्मिन् एव काले हयग्रीवनामकः राक्षसः माम् उद्दिश्य सहस्रं वर्षाणि यावत् तपः आचरितवान् । अहं प्रत्यक्षा भूत्वा – 'अपेक्षितं वरं प्रार्थयतु' इति तं सूचितवती । तदा सः – 'मम मरणम् एव न भवेत्' इति प्रार्थितवान् । अहं तं – 'यः जन्म प्राप्नोति तेन मरणं प्राप्तव्यम् एव । अतः अन्यं वरं याचतु' इति सूचितवती । अतः सः – 'अहं हयग्रीवः अस्मि । मम मरणं हयग्रीवद्वारा एव भवतु' इति प्रार्थितवान् । अहं तं वरेण अनुगृहीतवती । सः इदानीं समस्तं लोकं पीडयन् अस्ति । तं हन्तुं समर्थः

त्रिलोक्यां कोऽपि नास्ति । अतः भवन्तः अश्वस्य शिरः आनीय विष्णोः मुण्डे योजयन्तु । तेन हयग्रीवस्य सृष्टिः स्यात् । हयग्रीवः च राक्षसं हयग्रीवं हन्यात्'' इति उक्तवती ।

अनन्तरम् आदिशक्तिः अदृश्या अभवत् । तदा देवाः देवशिल्पिनम् आहूय – 'अश्वस्य शिरः विष्णोः मुण्डभागे योजयतु' इति आदिष्टवन्तः । देवशिल्पी तथैव कृतवान् । अनन्तरं विष्णुः हयग्रीवरूपं प्राप्य हयग्रीवराक्षसं हत्वा सर्वान् आनन्दितवान् ।''

तदनन्तरं सर्वे मुनयः – ''मधुकैटभयोः वृत्तान्तम् अपि श्रावयतु कृपया'' इति प्रार्थितवन्तः । तदा सूतमुनिः तयोः राक्षसयोः वृत्तान्तं श्रावितवान् – ''क्षीरसागरे शेषशय्यायां विष्णुः यदा शयानः आसीत् तदा तस्य कर्णाभ्यां द्वौ राक्षसौ उत्पन्नौ । तौ जले तरन्तौ स्वजन्मकारणं चिन्तयन्तौ आश्चर्यचकितौ । तदा कैटभः मधुम् अवदत् – ''एतस्य समुद्रस्य, आवयोः च कश्चन आधारः स्यात् खलु !'' इति ।

तस्य वचनस्य समाप्तेः समनन्तरम् अशरीरवाणी श्रुता । मधुकैटभौ तस्याः वाण्याः जपम् आरब्धवन्तौ । तदा आकाशे विद्युत्सञ्चारः जातः इव । तत् दृष्ट्वा राक्षसौ चिन्तितवन्तौ यत् आदिशक्त्याः तेजः स्यात् एतत् इति । तदा यत् श्रुतम् आसीत् तदेव मन्त्रं भावयित्वा तौ सहस्रं वर्षाणि यावत् तपः आचरितवन्तौ । तपसा प्रसन्ना देवी प्रत्यक्षा भूत्वा – 'अपेक्षितं वरं प्रार्थयताम्' इति उक्तवती । तौ स्वेच्छामरणम् अपेक्षितवन्तौ । देवी तेन वरेण तौ अनुगृहीतवती ।

अनन्तरं तौ जले सञ्चरन्तौ आस्ताम् । एकत्र ब्रह्माणं दृष्ट्वा युद्धार्थं तं निमन्त्रयन्तौ तौ उक्तवन्तौ – 'भवान् अस्माभिः सह युद्धं करोतु । अन्यथा पलायताम्' इति ।

तदा ब्रह्मा भीतः सन् योगसमाधौ स्थितं विष्णुं प्रार्थितवान् – ''महात्मन्, द्वौ राक्षसौ मां हन्तुम् इच्छतः । मां रक्षतु'' इति ।

विष्णुः योगनिद्रातः जागरितः न अभवत् । तदा ब्रह्मा आदिशक्तिं योगनिद्रां प्रार्थितवान् – ''एतयोः मारणार्थं भवती कृपया विष्णुं जागरयतु । अथवा भवती एव मां रक्षतु'' इति । तदा योगनिद्रा विष्णुं परित्यज्य गतवती । निद्रातः उत्तिष्ठन्तं विष्णुं दृष्ट्वा ब्रह्मा परमानन्दम् अनुभूतवान् ।




चन्दमामाप्रस्तुतिः
7
अजेयः गरुडः
चित्र - पाणिः
आदित्यः विरोधिदलस्य सदस्यस्य रामसिंहस्य द्वारा ज्ञातवान् यत् स्वस्य पितुः मरणं कथं जातम् इति । अतः सः विरोधिदलाय आश्वासनं दत्तवान् - 'अहं भवतां साहाय्यं करिष्यामि' इति । नरेन्द्रदेवः तत्पुत्रः रवीन्द्रदेवश्च स्वकार्ये मग्नौ आस्ताम् । सेनापतिः नरेन्द्रदेवः आज्ञापितवान् - 'कथञ्चित् गरुडः ग्रहीतव्यः एव' इति । महत्यां नौकायां गरुडः दृष्टः । नरेन्द्रदेवेन प्रेषिताः जनाः तत्र धावितवन्तः ।


सेनापतये पुरस्कारः दातव्यः ।
इतः परं वयं निश्चिन्ततया स्थातुम् अर्हेम ।
हन्त ! गरुडः कथमपि गृहीतः जातः ।
सर्वे सभासदः अत्याश्चर्येण गरुडदर्शनं प्रतीक्षमाणाः आसन् । निगडैः बद्धः मूर्च्छां गतः गरुडः आस्थानं प्रति आनीतः ।


राजा आज्ञापितवान् यत् नरेन्द्रदेवः गरुडस्य मुखावरणम् अपनयतु इति । किन्तु नरेन्द्रदेवः तत्र न आसीत् । रवीन्द्रदेवः एतत् कर्तुम् उद्युक्तः ।
अहम् एव एतस्य मुखावरणम् अपनेष्यामि ।....


भयेन चीत्कृतवान् रवीन्द्रदेवः । तत्रत्याः सर्वे आश्चर्येण स्तब्धाः ।
किम् एषः मम पिता एव !
एतत् अपमानकरं कृत्यं कः कृतवान् स्यात् ? सर्वे मुख्याधिकारिणः आनीयन्ताम् अत्र ।


राजा नितरां कुपितः ।
किं नरेन्द्रदेवः स्वयं गरुडः इव मुखावरणं धरति स्म ? अहो ! लज्जास्पदम् एतत् !!


महाराज ! मम तु भाति यत् 'गरुडः' कश्चन व्यक्तिविशेषः न इति । प्रजाप्रभुत्वम् अभिलक्ष्य आरब्धं किञ्चन आन्दोलनं स्यात् तत् ।


यदि भवतः कथनं सत्यं तर्हि एतद्विषये विस्तरेण विषयसङ्ग्रहः करणीयः । अचिरात् एव एतत् कार्यं भवान् एव सम्पादयतु ।


यथाज्ञापयति महाराजः । यदि जनाः इच्छेयुः तर्हि शासननियमाः अपि परिवर्तनीयाः भवेयुः ।


एतत्कार्यं कर्तुं षण्मासात्मकः कालः अपेक्षितः भवेत् ।


कालावधिः अनुमन्यते मया । आदित्य ! अद्यैव कार्यारम्भः क्रियताम् ।


गरुडः रामसिंहेन मिलितः । रामसिंहः एकः एव गरुडस्य रहस्यं जानाति स्म
इतोऽपि अधिकान् तरुणान् एकत्रीकृत्य अस्माभिः नदीतीरस्थः प्रदेशः समतलीकरणीयः ।
एतत् तु अल्पश्रमसाध्यं कार्यं श्रीमन् !


केषाञ्चित् सप्ताहानाम् अनन्तरं राज्ये कस्यचित् उत्सवस्य आचरणं प्रवृत्तम् ।


जनेषु एतावान् आनन्दः किमर्थम् ? जनाः आदित्ये किमर्थं तावन्तम् आदरं दर्शयन्ति ? स तु राजाज्ञापालनमात्रं करोति ।


रवीन्द्रः विना कारणम् उद्विग्नः भवति । चन्द्रपुरी-प्रशासनव्यवहारे अचिरात् एव परिवर्तनं भविष्यति ।


आदित्यस्य मार्गदर्शनस्य अनुगुणं क्षेत्रेषु कृषिकार्यं प्रवृत्तम् । तानि क्षेत्रानि भूमिरहितेभ्यः प्रदत्तानि ।
अचिरात् एव भविष्यति सुप्रभातम्


राज्ये प्रसृतां शान्तिं दृष्ट्वा राजा नितरां सन्तुष्टः ।
भवतः व्यवहारेण सन्तुष्टोऽस्मि आदित्य !
भवन्तम् अहं प्रधानमन्त्रिणं करिष्यामि ।
किन्तु महाराज !


....तत्स्थाने अनुभवी कश्चित् नियोक्तव्यः ।
आदित्यः प्रधानमन्त्री भविष्यति ? तस्य तादृशी शैक्षणिकयोग्यता का अस्ति ?
एषः तु मम निर्णयः । एतं सर्वत्र उद्घोषयन्तु तावत् ।
- अनुवर्तते




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'अगस्ट्'मासीयस्पर्धाशीर्षिकाप्रेषकः –**
**श्री श्रीकान्त दातार्**
**७, मेघदूतसहनिवासः, टिळकपथः**
**टिळकनगरम्, ठाणे – ४०० ६०३**
**महाराष्ट्रम्**

### पुरस्कृतशीर्षिका





**सम्भाषते बालकः सुहृदा ।**
**अनुभवति सान्निध्यं जनन्याः**

# Are you a fan of Garuda, the masked hero with magical powers?

**Enjoy the exciting exploits of Garuda!**




Don't miss the Garuda comics in Chandamama anymore!
Subscribe to Chandamama today!

Chandamama Annual Subscription within India Rs. 120/-
Send your remittances by DD or MO favouring CHANDAMAMA INDIA LIMITED, to
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097.
E-mail : subscription@chandamama.org

